नमः तद्बहिः पूर्वादि वज्राय नमः। शक्त्यै नमः। दण्डाय नमः। खड्गाय नमः। पाशाय नमः। अंकुशाय नमः। गदायै नमः। त्रिशूलाय नमः। इत्यावरण पूजा।

देवस्य सन्ध्यां कारयित्वा ॥ दुर्गा गायत्र्या अर्ध्यत्रयं दत्वा । ॐ कात्यायिन्यै च विद्महे कन्या-कुमार्यै धीमहि। तन्नोदुर्गा प्रचोदयात् ॥

## अथ चतुषष्टि योगिनी पूजां करिष्ये

ॐ जयायै नमः।
ॐ विजयायै नमः।
ॐ जयंत्यै नमः।
ॐ अपराजितायै नमः।
ॐ दिव्ययोगिन्यै नमः।
ॐ महा योगिन्यै नमः।
ॐ सिद्धमहा योगिन्यै नमः।
ॐ प्रियतारण्यै नमः।
ॐ डाकिन्यै नमः।
ॐ शाकिन्यै नमः।
ॐ कान्त्यै नमः।
ॐ कालरात्र्यै नमः।
ॐ निशाचर्यै नमः।
ॐ काल्यै नमः।
ॐ रौद्रै नमः।
ॐ हुंकार्यै नमः।
ॐ तडामर्यै नमः।
ॐ केशिन्यै नमः।
ॐ विरूपाक्ष्यै नमः।
ॐ शुष्कांगिन्यै नमः।
ॐ नरभोगिन्यै नमः।
ॐ आर्यायै नमः।
ॐ भीषण्यै नमः।
ॐ त्रिपुरांतक्यै नमः।
ॐ भैरव्यै नमः।
ॐ क्रोधिन्यै नमः।
ॐ दुर्मरण्यै नमः।
ॐ प्रेत वाहिन्यै नमः।
ॐ फट्कार्यै नमः।
ॐ वीरभद्रायै नमः।
ॐ धूम्राक्ष्यै नमः।
ॐ कलहप्रियायै नमः।

ॐ राक्षस्यै नमः।
ॐ घोर रक्तायै नमः।
ॐ विश्व रूपिण्यै नमः।
ॐ भयंकर्यै नमः ।
ॐ वीरकौमार्यै नमः ।
ॐ चंड्यै नमः।
ॐ वाराह्यै नमः।
ॐ मुण्डधारिण्यै नमः।
ॐ खट्वांगिन्न्यै नमः।
ॐ दीर्धलं बोष्ट्यै नमः।
ॐ मालिन्यै नमः।
ॐ मन्त्रयोगिन्यै नमः।
ॐ करालिन्यै० नमः।
ॐ गदिन्यै० नमः।
ॐ चक्रिण्यै नमः।
ॐ भुवनेश्वर्यै नमः।
ॐ फाटक्यै नमः।
ॐ महामायायै नमः।
ॐ कण्टक्यै० नमः।
ॐ ताटक्यै० नमः।
ॐ यमदूत्यै नमः।
ॐ करालिन्यै नमः।
ॐ केशिन्यै नमः।
ॐ मेदिन्यै नमः।
ॐ पक्षिण्यै नमः।
ॐ सोमघटायै नमः।
ॐ प्राणहारिण्यै नमः।
ॐ लक्ष्म्यै नमः।
ॐ लोलायै नमः ।
ॐ काकद्दष्ट्यै नमः ।

## ॥ अथ अष्टोत्तरशतपूजा ॥

ॐ माहेश्वर्यै नमः।
ॐ महादेव्यै नमः।
ॐ जयंत्यै नमः।
ॐ सर्वमंगलायै नमः।
ॐ लज्जायै नमः।
ॐ भगवत्यै नमः।
ॐ वंद्यायै नमः।
ॐ भवान्यै नमः।
ॐ पाप नाशिन्यै नमः।
ॐ चंडिकायै नमः।१०।
ॐ कालरात्र्यै नमः।
ॐ भद्रकाल्यै नमः।
ॐ अपराजितायै नमः।
ॐ महा विद्यायै नमः।
ॐ महामेधायै नमः।
ॐ महामायायै नमः।

ॐ महाबलायै नमः।
ॐ कात्यायन्यै नमः।
ॐ जयायै नमः।
ॐ दुर्गायै नमः।२०।
ॐ मंदारवनवासिन्यै नमः।
ॐ आर्यायै नमः।
ॐ गिरिसुतायै नमः।
ॐ धात्र्यै नमः।
ॐ महिषासुरघातिन्यै नमः।
ॐ सिद्धिदायै नमः।
ॐ बुद्धिदायै नमः।
ॐ नित्यायै नमः।
ॐ वरदायै नमः।
ॐ वरवर्णिन्यै नमः।३०।
ॐ अंबिकायै नमः।
ॐ सुखदायै नमः।
ॐ सौम्यायै नमः।
ॐ जगन्मात्रे नमः।
ॐ शिवाप्रियायै नमः।
ॐ भक्त संतापसंहर्त्र्यै नमः।
ॐ सर्व कामप्र पूरिण्यै नमः।
ॐ जगत्कर्त्र्यै नमः।
ॐ जगध्दात्र्यै नमः।४०।
ॐ जगध्दत्र्यै नमः।

ॐ जगत्पालनतत्परायै नमः।
ॐ अव्यक्तायै नमः।
ॐ व्यक्तरूपायै नमः।
ॐ भीमायै नमः।
ॐ त्रिपुरसुंदर्यै०।
ॐ अपर्णायै नमः।
ॐ लालितायै नमः।
ॐ वेद्यायै नमः।
ॐ पूर्णचन्द्रनिभाननायै नमः।
ॐ चामुण्डायै नमः।५०।
ॐ चतुरायै नमः।
ॐ चन्द्रायै नमः।
ॐ गुणत्रयविभागिन्यै नमः।
ॐ हेरम्बजनन्यै नमः।
ॐ काल्यै नमः।
ॐ त्रिगुणायै नमः।
ॐ यशोधारिण्यै नमः।
ॐ उमायै नमः।
ॐ कलश हस्तायै नमः।
ॐ दैत्यदर्पनिषूदिन्यै नमः।६०।
ॐ बुध्यै नमः।
ॐ कान्त्यै नमः।
ॐ क्षमायै नमः।
ॐ शान्त्यै नमः।

ॐ पुष्ट्यै नमः।
ॐ तुष्ट्यै नमः।
ॐ धृत्यै नमः।
ॐ मत्यै नमः।
ॐ वरायुध धरायै नमः।
ॐ धीरायै नमः।७०।
ॐ गौर्यै नमः।
ॐ शाकंभर्यै नमः।
ॐ शिवायै नमः।
ॐ अष्टसिद्धिप्रदायै नमः।
ॐ वामायै नमः।
ॐ कामायै नमः।
ॐ शिववामांग वासिन्यै नमः।
ॐ धर्मदायै नमः।
ॐ धनदायै नमः।
ॐ श्रीदायै नमः।८०।
ॐ कामदायै नमः।
ॐ मोक्षदायै नमः।
ॐ अपरायै नमः।
ॐ चित्स्वरूपायै नमः।
ॐ चिदानंदायै नमः।
ॐ जयश्रियै नमः।
ॐ जयदायिन्यै नमः।
ॐ सर्वमंगल मांगल्यायै नमः।
ॐ जगत्रयहितैषिण्यै नमः।
ॐ शर्वाण्यै नमः।९०।
ॐ पार्वत्यै नमः।
ॐ धन्यायै नमः।
ॐ स्कन्धमात्रे नमः।
ॐ अखिलेश्वर्यै नमः।
ॐ प्रपन्नार्ति हरायै नमः।
ॐ देव्यै नमः।
ॐ सुभगायै नमः।
ॐ कामरूपिण्यै नमः।
ॐ निराकारायै नमः।
ॐ साकारायै नमः।१००।
ॐ महाकाल्यै नमः।
ॐ सुरेश्वर्यै नमः।
ॐ शर्वायै नमः।
ॐ श्रद्धायै नमः।
ॐ ध्रुवायै नमः।
ॐ कृत्यायै नमः।
ॐ मृडान्यै नमः।
ॐ भक्तवत्सलायै नमः।
ॐ सर्व शक्तिसमायुतायै नमः।
ॐ शरण्यायै नमः।
ॐ सर्वकामदायै नमः।

ॐ कर्दमेन प्रजा०।। ॐ यत्पुरुषं० ।। दशांगं गुग्गुलं धूपं चंदनागरु संयुतं । समर्पितं मया भक्त्या महालक्ष्मी प्रगृह्यताम् । ॐ दुं दुर्गायै नमः। धूपं समर्पयामि । ॐ आपः सृजंतु० ।। ब्राह्मणोऽस्य० ।। घृतवर्ति समायुक्तं महातेजो महोज्वलम् । दीपं दास्यामि गिरिजे सुप्रीता भव सर्वदा । ॐ दुं दुर्गायै नमः । दीपं समर्पयामि ।। ॐ आद्रां पुष्करिणीं० ।। ॐ चंद्रमामनसोजा० ।। ॐ अन्नं चतुर्विधं स्वाधु षड्भिस्समन्वितम् नैवेद्यं गृह्यतां देवि भक्तिं मे ह्यचलां कुरु । दुंदुर्गायै नमः नैवेद्यं ।। समर्पयामि। ॐ गंधतोयं समानीतं सुवर्ण कलशे स्थितम् । हस्त प्रक्षालनार्थाय पानीयंते निवेदये ।। ॐ दुं दुर्गायै नमः हस्तप्रक्षालनं समर्पयामि ।। ॐ द्राक्षाखर्जूर कदली पनसाम्रकपित्थकं। नारिकेलेक्षु जंब्वादि फलानि प्रतिगृह्यतां । ॐ दुं दुर्गायै नमः फलानि समर्पयामि।। ॐ आद्रां यः करिणीं० नाभ्या आसि० ॐ एलालवंग कस्तूरि कर्पूरैः पुष्प वासितां। वीटिकां मुख वासार्थमर्पयामि सुरेश्वरी।। ॐ दुर्गायै नमः। ताम्बूलं समर्पयामि ॐ पूजाफल समृध्यर्थं तवाग्र ०अर्पितंमया। हिरण्यरुपा त्वं पूर्णं कुरु मनोरथान् दुं दुर्गायै नमः । दक्षिणां समर्पयामि ।। ॐ तांम आवह०।। ॐ सप्तास्यासन्०।। ॐ श्रिये जातश्रिय०।। ॐ कौशेयवर्ति संयुक्तं गोघृतेन समन्वितम्।नीरांजनं मयादत्तं गृहाण परमेश्वरी।। ॐ दुं दुर्गायै नमः।। नीरांजनं समर्पयामि ।।

ॐ यः शुचिः प्रयतो भूत्वा । ॐ यज्ञेन ।। ॐ दामोदरि नमस्तेस्तु नमस्त्रैलोक्य नायके नमस्तेस्तु महालक्ष्मी त्राहिमां परमेक्ष्वरि ह्रीं दुर्गायै नमः ।। मन्त्रपुष्पं समर्पयामि ।। ॐ नमस्ते

देव देवेशि नमस्ते शंकरप्रिये। नमस्ते देवदेवेशि नमस्ते ईप्सित प्रदे ऊँ दुं दुर्गायै नमः। नमस्कारान् समर्पयामि ।। यानि कानि च पापानि प्रदक्षिणां स०। ऊँ नाना पुष्पकृतां मालां नाना पुष्पैः समन्वितां। प्रयच्छामि सुरेशानि सुप्रीता वरदा भव ।। ऊँ ह्रीं दुं दुर्गायै नमः । मालार्पणं समर्पयामि ।। ऊँ पूजा फलादि कार्याद्यौ सुकृतं यन्मयार्चितं । तत्सर्वं फलदं मेस्तु भक्ति मुक्त यर्थ देहिमे। लक्ष्मी त्वत्प्रज्ञायानित्यं कृतापूजा तवाज्ञया ।। स्थिरा भव गृहेह्यस्मिन् मम संतान कारिणी ।। न्यूनं वा अप्याधिकं वापि यन्मया मोहतः कृतं ।। सर्वं तदस्तु संपूर्णं त्वत्प्रसादान्महेश्वरी । ममाभीष्ट प्रदानित्यं भव सुप्रीत मानसा । ऊँ दुं दुर्गायै नमः । प्रार्थनां समर्पयामि ।। कायेनवाचा० अनेन कृत पूजा संपूर्ण फल प्राप्त्यर्थं कल्पोक्त पूजाराधनेन भगवान् तत्सत् श्री कृष्णार्पण मस्तु।। ऊँ तत्सत्।।

अथ हवनं।। हे कुण्ड नवनिर्माणं यथामतिमया कृतं। कृपया भव संपूर्णं कुरु सिद्धिं नमोस्तुते। कुण्डं गंधादीना सम्पूज्य। ततः कुण्डमेखलासु महाकाल्यादि देवता त्रयं संचित्य।। महा काल्यै नमः।। महालक्ष्म्यै नमः।। महा सरस्वत्यै नमः।।

ॐ ह्रीं क्लीं चामुण्डायै विच्चे इति मूलमंत्रेण कुण्डं वीक्ष्य। कुण्डं भुवं त्रिभिर्दर्भैः परिमार्जयेत् गोमयेनोपलिप्य। ऊँ ऐं ह्रीं क्लीं चामुण्डायै विच्चे अस्त्राय फट्।। गोमयोदकं संप्रोक्ष्य ।। ॐ ऐ ह्रीं क्लीं चामुण्डायै विच्चे हृदयाय नमः। कुण्डे कुशमूलेन वा सुवमूलेन प्रागग्रा उदगग्रास्तिस्रो रेखाः कार्याः तत्र प्रागग्र रेखासु मुकुन्दं पुरंदरं ब्रह्मवैवस्वतं इंदुं अभ्यर्च्य ।।

तैः दर्भैः संताड्य।। ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे कवचाय हुं। इति दक्षिणतः आारभ्य उदक्संस्थां प्रति रेखायां अनामिकांगुष्ठेन पांशु उद्धृत्य पुरो भागे क्षिपेत् मूलेन ॐ ऐ ह्रीं क्लीं चामुंडायै विच्चे सर्वान् अभ्युक्ष्य माया बीजेन कुण्डं गंधादिना पूज्यताः आवाहनादि सप्त मुद्राः प्रदर्श्य।। अस्त्रेण अवगुंठ्य ह्रीं। अग्नि प्रतिष्टापनादि कृत्वा।। उद्देशानुसारं अग्नि नाम उक्त्वा।। **अन्नप्रधानं**।। श्री महाकाली महालक्ष्मी महासरस्वतीं प्रधान देवताः श्री नवार्णव मंत्रेण अष्टोत्तर शत संख्यया समिधाज्य पायस द्रव्येण ।। जातवेदसे० तामाग्नि वर्णां० अग्नेत्वंपार विश्वानिनो० पृतनाजित० इति पंचभिर्मंत्रै अष्टाविंशति अष्ठाविंशति संख्यया समिधाज्य पायसद्रव्येण।। प्रधान देवतां महाकालीं सावार्णि० सूर्य तनयो इत्यारभ्य भूयः शृणुवदामिते इत्यंतं चतुरुत्तर शतमंत्रैः (१०४) प्रधान देवतां महालक्ष्मीं देवासुर मभूद्युद्धं इत्यारभ्य यथावत्कयारामिते इत्यंतं पंच पंचाशदुत्तरशत मंत्रैः १५५ प्रधानदेवतां महासरस्वातीं पुरा शुम्भ निशुम्भाभ्यां इत्यारभ्य सावर्णिर्भविता मनुः इत्यंतं एक चत्वारिंशत् उत्तर चतुः शत मंत्रैः ४४१ चरुमातुलिंग क्षीराज्य मधु शर्करतिल युक्त पायस द्रव्येण।। प्रति उवाच मंत्रैः पायस युक्त कदलीफल तांबूल द्रव्येणयक्ष्ये।। प्रति चरित्र पूर्वापर अष्टोत्तर अष्टोत्तर नवार्णव मंत्रेण आज्येन यक्ष्ये।। जातवेदसे इत्यादि पंचदुर्गामंत्रैः अष्ठाविंशति अष्ठाविंशति संख्यया आज्येन यक्ष्ये पुरुष सूक्तेन षोडशऋग्भिः आज्येन।। हिरण्य सूक्तेन पंचादश ऋग्भिः।। यथा योग्यं दुर्गा मूल, माला, मंत्रैः, श्लोकैरपि ग्राह्यं ।

आज्येन ।। पीठावरण देवतानां एकैक संख्यया आज्यद्रव्येण यक्ष्ये गृह्योक्तमंत्रेण चरु शेषेण स्विष्टकृतं ।।

**(केचित्)- अथमुखाहुतिः** ।। वायव्यां । ॐ सुवर्णायै स्वाहा। मध्ये ॐ कनकायै स्वाहा ।। उत्तरे ।। ॐ रक्षात्ताक्ष्यै स्वाहा ।। दक्षिणे ॐ कृष्णायै स्वाहा पूर्वे ॐ सुप्रभायै स्वाहा ।। आग्नेयां ॐ अतिरक्तायै स्वाहा। ईशान्यां ॐ बहुरूपायै स्वाहा ।। **अथ इध्माहुतिः।**

पक्वत्रयं हुत्वा।। ॐ ऐं महाकाल्यै स्वाहा।। ॐ ह्रीं सर्वाद्यायै सर्वरूपिण्यै महालक्ष्म्यै स्वाहा।। ॐ क्लीं अष्ट भुजायै महा सरस्वत्यै स्वाहा ।। अथाज्येन ।। ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे सावित्र्यै स्वाहा ।। ॐ मूलेन कांत्यै स्वाहा ।। ॐ मूलेन संतत्यै स्वाहा।। ॐ मूलेन विष्ट्यै स्वाहा ।। ॐ मूलेन उत्कृत्यै स्वाहा ।। ॐ मूलने रुध्यै स्वाहा।। प्रधानहोमं हुत्वा।। प्रधान हवन काले- नमस्कार पुष्पांजलि-तर्पणं कार्यं ।। स्विष्टकृतं।। ॐ यदस्य० ॐ माहेश्वरीं च कौमारीं वैष्णवीं वाराहीं नारसिंही ऐं ह्रीं क्लीं चामुण्डायै विश्वेश्वरीं जगद्धात्रीं स्थिति संहार कारिणीं ।। स्तोमनिद्रां भगवतीं विष्णोरमित तेजसां स्विष्ट कृतेस्वाहा वैक्ष्वानरायेदं नमम ।।

अथआज्य समिधं परिधय ।।तिस्रः।। ॐ वसुभ्यः स्वाहा ।।१।। ॐ रुद्रेभ्यः स्वाहा ।।२।। ॐ आदित्येभ्यः स्वाहा ।।३ ।। त्रिसंधान रुद्र भागं हुत्वा ।। अयासादि सप्ताहुति होमः ब्रह्मणे प्रायश्चित्ता हुतयः ।।

## ।।अथ महाहुतयः ।।

। (१) ॐ नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणतास्मताम्।। सांगायै सपरिवारायै सवाहनायै सायुधायै **वाग्भव बीजाधिष्ठात्र्यै** महाकाल्यै महाहुतिं समर्पयामि नमः स्वाहा।। **कपित्थफलं**।

।। (२) ॐ नमो देव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै लक्ष्मी बीजाधिष्ठात्र्यै महाहुतिं समर्पयामि नमः स्वाहा ।। नारीकेलफलं ।। ॐ नमो देव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै **अष्टाविंशति वर्णात्मिकायै** महालक्ष्म्यै महाहुतिं समर्पयामि नमः स्वाहा **मधुपुष्पं** ।।

(३) ॐ नमो देव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै त्रिवर्णात्मिकायै शक्ति लक्ष्मयै महाहुतिं समर्पयामि नमः स्वाहा।। **पूगीफलं**।।

।।। (४) ॐ नमों देव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै **विष्णुमायादि त्रयोविंशति देवतायै०** महाहुतिं समर्पयामि नमः स्वाहा।। **बीजापूरफलं।**

(५) नमो देव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै **शताक्ष्यै धूम्राक्ष्यै** महाहुतिं समर्पयामि नमः स्वाहा ॥ **नारिंगफलं** ॥

(६) नमो देव्यै महादेव्यै० सांगायै सपरिवारायै स वाहनायै सायुधायै **कर्पूरबीजाधिष्ठात्र्यै काली चामुण्डायै** देव्यै महाहुतिं समर्पयामि नमः स्वाहा ॥ **कूष्माण्डफलखंडं** ॥

(७) ॐ नमो देव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै **रक्ताक्ष्यै देव्यै** महाहुतिं समर्पयामि नमः स्वाहा । **(इक्षु दंड खंडं)**

(८) ॐ नमो देव्यै महादेव्यै० सांगायै सपरिवारायै सायुधायै **वाग्भव बीजाधिष्ठात्र्यै** महाकाल्यै महाहुतिं समर्पयामि नमः स्वाहा ॥ **कूष्मांडखंड इक्षदण्ड खंडं**

(९) ॐ नमोदेव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै **सिंहवाहनायै त्रिशूलपाश धारिण्यै** महाहुतिं समर्पयामि नमः स्वाहा ॥ **(मातुलिङ्ग फलं)**

(१०) ॐ नमोदेव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै **सर्व नारायण्यै** महाहुतिं समर्पयामि नमः स्वाहा ॥ **(दाडिमफलं)**

(११) ॐ नमो देव्यै महादेव्यै- सांगायै सपरिवारायै स वाहनायै सायुधायै **बाला त्रिपुरसुन्दर्यै** महाहुतिं समर्पयामि नमः स्वाहा।। **बिल्वफलं।।**

(१२) ॐ नमो देव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै० श्री त्रिपुर सुंदर्यै श्री विद्यायै महाहुतिं समर्पयामि नमः स्वाहा।। **कदळीफलं।।**

## बलिदानम्

अथ प्रधान देवताभ्यः बलिं महालक्ष्मी महाकाली महासरस्वती।। दिग्देवता नामानि योगिन्यादि यंत्रसंस्थ आवरण देवताभ्यः प्रत्येकं बलिं दद्यात्।। **कूष्माण्ड बलिविधानम्** ।। आचम्य प्राणानायम्य देशाद्युच्चार्य।। मम (यजमानस्य वा) सर्वारिष्ट प्रशांति सर्वा भीष्ट कामनासिद्धि कल्पोक्त फलावाप्ति द्वारा श्रीमहाका० देवताप्रीत्यर्थं कूष्माण्डबलिदानं च करिष्ये।। मूलेन मुख्य देवतां पंचोपचारै संपूज्य तत्पुरतः स्वयमुदङ्मुखो बलिं प्राङ्मुखं पीठे वस्त्रगुंठितं कूणमाण्डं निधाय ॐ कूष्माण्डबलये नमः इति आवाहन वस्त्र गंधादिभिः सम्पूज्य अभिमंत्रयेत्।।

पशुस्त्वं बलिरूपेण मम भाग्यादवस्थितः। प्रणमोमि ततः सर्वरूपिणं बलि रूपिणं।।१।। चंडीकाप्रीति दानेन दातुरापद्विनाशनम्। चामुंडाबलि रूपाय बले तुभ्यं नमोऽस्तुते।।२।। यज्ञार्थं बलयः सृष्टाः स्वयमेव स्वयंभुवा। अतस्त्वां घात याम्यद्य यस्माद्यज्ञे मतो वधः ।।३।। इति।। ततः शस्त्रं गंधादिना संपूज्य अभिमन्त्रयेत।। ऐं ह्रीं श्रीं।। रसनात्वं

चंडिकायाः सुरलोक प्रसादकः।। इति ह्रां ह्रीं खड्ग आं हुं फट् इति हस्ते शस्त्रं गृहीत्वा ॐ कालि कालि वज्रेश्वरि लोहदंडायै नमः।। इति पठन् छिद्यात्।। छेदनावसरे च न विलोकयेत् कौशिकी रुधिरेणाप्यायतामिति देव्यै अर्धं निवेद्य अवशिष्ठार्धस्य पंचभागान् कृत्वा पूतनायै बलि भागं निवेदयामि चरक्यैबली० विदार्यै बलि० पापराक्षस्यै बलि०।। ततो माषपिष्टपशुं शत्रुं शस्त्रेण छित्वा स्कंधाय पश्वर्ध समर्पयामि, विशिखाय पश्वर्ध स० इति समर्प्य शेषं रक्षोभ्यो हरेत ।। मंत्रास्तु ॐ ह्रीं स्फुर स्फुर ॐ प्रीं ॐ हुं फट् मर्द मर्द हुं इति ।। तच्छेषं बहिर्दद्यात्।। बलिं गृह्णंत्विमं देवा आदित्या वसवस्तथा।। मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः।। असुरा यातुधानाश्च पिशाचोरगराक्षसाः डाकिन्यो यक्ष वेताला योगिन्यः पूतनाः शिवाः।। जृंभका सिद्ध गंधर्वाः साध्या विधाधरानगाः।। दिक्पाला लोकपालाश्च ये च विघ्न विनायकाः।। जगतां शांतिकर्तारौ ब्रह्माद्याश्च महर्षयः । माविहतं माच मे पापं मा संतु परिपंथिनः।। सौम्या भवंतु तृप्ताश्च भूतप्रेताः सुखावहाः।। भूतानि यानिह वसंति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तम्।। अन्यत्र वासं परिकल्पयंतु रक्षंतु मां तानि सदैव चात्रेति ।।

--xxx--

आचम्य प्राणानायम्य देशकालौ संकीर्त्य अमुक प्रवरान्वित अमुकगोत्रोत्पन्नोहं अस्माकं सर्वेषां सकुटुम्बानां महाजनानां निखिल पाप क्षयपूर्वक दुःख व्याधिभय नाश

बंधुजनक्षयाभाव साग्रवर्षशत जीवित्वैक स्वर्गावास नरकनिमग्नकुलाऽखिल पित्रोद्धारक श्रीविष्णु आलय गमनादि अनेक मनोलषित कामना सिध्यर्थं।

श्री चण्डिका प्रसाद द्वारा आध्यात्मिक आधिदैविक आधिभौतिक तापत्रय निरसन पूर्वकं चरा चरस्य अस्य जगतः उत्कर्षापकर्ष कारकाणां गोचरित षष्टाष्टमव्ययस्थिता नांस्थित्यादशां तर्दशा प्राणदशा सूक्ष्मदशा योगिनीकाल चक्रादि दशाच्च साधक बाधकानां सूर्यादि नवग्रहाणां सकाशात् सूचित सूचयिष्यमाण सकलारिष्ट निरसनार्थं महाकालि महालक्ष्मि महा सरस्वति इति अवतार भेदैः स्वभक्त परिपालन शीलायाः शिष्टजनपरिपालिन्याः चण्ड मुण्ड मधुकैटभशुंभनिशुंभ रक्तबीजादि दुष्टासुर निग्रहकरिण्याः श्री चण्डिकापरमेश्वर्याः प्रसादेन सर्वपाप दोष परिहार पूर्वक सकलाभ्युदय परमनिःश्रेय स धन धान्य सुख समृद्धि दीर्घायुष्य वंशाभिवृद्धि पुत्रपौत्राद्यनवच्छिन्न संतति गजाश्वरथादि परम वैभव प्राप्त्यर्थं।

दुष्ट कृत मारण मोहन स्तंभन विद्वेषणजारणमंत्रयंत्र तंत्रादि सर्व आभिचारक बाधानिरसनार्थं (श्री चण्डिका परमेश्वरी) श्री महाकाली महालक्ष्मी महासरस्वती अन्तर्गत श्री चण्डिका परमेश्वरी प्रीत्यर्थे।। चण्डिका होमं करिष्ये।।

श्री गणेशाय नमः

## चंडी होम विधानं

### यन्त्रलेखनं

मध्ये त्रिकोणं।। तदुपरि वृत्तं।। तद्बहिः षट्कोणं।। तद्बाह्ये वृत्तं।। तद्बाह्येऽष्टौ दलानि।। तद्बाह्ये चतुरस्रं चतुर्द्वारं।।

यजमानः शुभदिने सपत्नीकः तैलेन कृताभ्यंगः स्नात्वा।। संपूर्ण कलशहस्तो मंटपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविश्योपविश्य।। देशकालौ स्मृत्वा।। ममेहजन्मनि दुर्गाप्रीतिद्वारा सर्वापच्छांति पूर्वक दीर्घायुः विपुल धन धान्य पुत्रपौत्राद्यनवच्छिन्न संततिस्थिर लक्ष्मी किर्ति लाभ शत्रुपराजय सदभीष्ट सिद्ध्यर्थं ममामुक कार्यसिद्ध्यर्थं नवचण्डी (शत चण्डी)(सहस्र चण्डिका) हवनं करिष्ये।।

तदंगतया गणेशपूजनं। पुण्याहवाचनं। मातृका पूजनं। नांदी श्राद्धमाचार्यदिवरणं चकरिष्ये।। इति संकल्प्य।। तानि कृत्वा।। आचार्यादीन्वृत्वा तान्यथा विभवं वस्त्रादिना संपूज्य प्रार्थयेत्।। (तेच शतचण्ड्यां दश।। सहस्रचण्ड्यां शतं।।)

अथाचार्यः। आचम्य पवित्रपाणिः देशकालौ स्मृत्वा। यजमानेन वृतोऽहं आचार्यकर्म करिष्ये।। यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा। स्थानंत्यक्त्वा तत्सर्वं यत्रस्थं तत्रगच्छतु।। अपसर्पन्तु येभूताः ये भूता० पूजा कर्म समारभेत्।। इति गौरसर्षपान् विकीर्य।। पंचगव्येन।। शुद्धोदकेन। शुचीवो मैत्रावरुणिः मरुतः त्रिष्टुप्। भूमि प्रोक्षणे विनियोगः। ॐ शुची

वो हव्या मरुतः शुचीनां शुचिंहिनोम्यध्वरं शुचिभ्यः।। ऋतेन सत्य मृतसाप आयनूच्छुचि जन्मानः शुचयः पावकाः।। अपवित्रः पवित्रोवा सर्वावस्थां गतोपिवा। यः स्मरेत् पुंडरीकाक्षं स बाह्याभ्यान्तरः शुचिः।। ततः कृतांजलि पुटः तिष्ठन्।।

ॐ स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानां।। असुरघ्नमिंद्रसखं समत्सु बृहद्यशो नावमिवारुहेम।। अंहोमुचमांगिर सं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यं।। प्रयतपाणिः शरणं प्रपद्ये स्वस्ति संबाधेष्वभयंनो अस्तु।। देवाआयांतु।। यातुधानाअपयान्तु।। विष्णोदेव यजनं रक्षस्व।। भूमौ प्रादेशं कुर्यात्।। पृथ्वि त्वया धृता लोका देवित्वं विष्णुनाधृता। त्वं च धारय मां देवि पवित्रं कुरु चासनं।। अनन्तासनाय नमः।। विमलासनाय नमः।। पद्मासनाय नमः।। (अपक्रामंतु इति भूमौ (वामपाद घातत्रयं कृत्वा) यथोपदेशं विस्तरतः सक्षेपेण वा भूतशुध्यादि कृत्वा।। नवार्णविध्युक्त एकादश न्यासान्कुर्यात्।।

ततो योनिमुद्रां प्रदर्श्य ध्यायेत् ।।
श्वेतानना नीलभुजा सुश्वेतस्तनमण्डला।।
रक्तमध्या रक्तपादा नीलजंघो रुरुन्मदा।।
सुचित्र जघना चित्रमाल्यांबर विभूषणा।।
चित्रानुलेपना कान्तिरूपा सौभाग्य शालिनी ।।
अष्टादशभुजा पूज्या सा सहस्र भुजासती।।
आयुधान्यत्र वक्ष्यंते दक्षिणाधः करक्रमात् ।।
अक्षमालाच कमलं बाणोऽसि कुलिशंगदा।।

चक्रं त्रिशूलं परशुः शंखो घण्टा च पाशकः।। शक्तिर्दण्डश्चर्म चापं पानपात्रं कमंडलुरिति।। ततो वेद्यां सर्वतोभद्रमष्टदलं वा विलिख्य।। तत्र ब्रह्मादिमण्डल देवताः संस्थाप्य।। तस्मिन् गन्धपुष्पफलसर्वौषधि दूर्वापंच पल्लव सप्त मृत्तिकास्तत्तन्मत्रेण निक्षिप्य।। वस्त्रद्वयेनावेष्ट्य।। तदुपरि पूर्णपात्रं निधाय। कलशे वरुणमावाह्य।। पूजयेत्।। ततः कलशदेवताः स्मरेत्।।

----ooo----

**मंटपार्चनं**।। ॐ योगमंटपाय नमः।। ॐ रत्नमंटपाय नमः।। ॐ स्वर्णमंटपाय नमः।। ॐ भोगमंटपाय नमः।। ॐपद्मपीठाय नमः।। द्वारपालपूजा पूर्वद्वारे श्रियैनमः।। भद्रायै नमः।। सुभद्रायै नमः।।

दक्षिण द्वारेश्रियै नमः।। बलाय नमः।। प्रबलाय नमः।। पश्चिमे द्वारेश्रियै नमः।। चंडाय नमः।।प्रचण्डाय नमः।। उत्तरे द्वारश्रियै नमः।। जयाय नमः।। विजयाय नमः।। संपूज्य।

कलशस्य मुखेविष्णुः०। देवदानव संवादे मध्यं०।। इतिकलशं प्रार्थयेत्।। तथा कलशोपरिस्थ पूर्णपात्रे वस्त्रे यन्त्रं लिखेत्।। तद्यथा।।

मध्ये त्रिकोणं। तद्बहिः षट्कोणं। तद्बाह्ये वृत्तं।। तद्बाह्येष्टौ दलानि।। तद्बाह्ये चतुर्द्वारं।। चतुरस्त्रं त्रयं इति।. एवं यन्त्रं विलिख्य।। तत्राष्टादश भुजां। अष्टभुजां वा सिंहारूढां सौवर्णीं देवि मूर्तिमग्न्युत्तारण प्राणप्रतिष्ठा पूर्वकं प्रतिष्ठाप्य पूजयेत्।।

तद्यथा स्ववामे कर्पूरादियुत जलपूर्णा। कलश शंखपूजां कृत्वा शंखोदकेन पूजा द्रव्याणि प्रोक्षयेत्।। मंटपपूजा द्वारपालपूजा।।

**पीठ पूजा।।** देविदक्षिणे गुं गुरुभ्यो नमः।।

ॐ पं पंरमगुरुभ्यो नमः।। ॐ परात्पर गुरुभ्यो नमः।। ॐ परमेष्ठि गुरुभ्यो नमः।। वामे ॐ गं गणपतये नमः।। ॐ दुं दुर्गायै नमः।। ॐ क्षं क्षेत्रपालायनमः ।। ॐ कालाग्निरुद्राय नमः।। ॐ महामण्डूकाय नमः।। ॐ कूर्माय नमः।। ॐ वराहाय नमः।। ॐ अनन्ताय नमः।। ॐ भूम्यै नमः।। ॐ अमृतार्णवाय नमः ।। रत्नद्वीपाय नमः ।। ॐ हेमगिरये नमः ।। ॐ नन्दनोद्यानाय नमः।। ॐ मणिभूम्यै नमः ।। ॐ रत्नमण्डपाय नमः।। ॐ कल्पतरवे नमः ।। ॐ रत्नसिंहासनाय नमः।। आग्नेयादि कोणेषु ॐ धर्मायनमः।। ॐ ज्ञानाय नमः ।। ॐ वैराग्याय नमः।। ॐ ऐश्वर्याय नमः ।। पूर्वादिकोणेषु अधर्माय नमः।। ॐ अज्ञानाय नमः।। ॐ अवैराग्याय नमः।। अनैश्वर्यायनमः।। ऊर्ध्वे ॐ ब्रह्मणे नमः ।। अधः अनन्ताय नमः।। मध्ये वास्तुपुरुषाय नमः ।। ॐ सं सत्वाय नमः।। ॐ रं रजसे नमः ।। ॐ तं तमसे नमः ।। ॐ मां मायायै नमः।। ॐ विं विद्यायै नमः।। ॐ पं पद्मायैनमः।। पूर्वादि अष्टदिक्षु।। ॐ उड्डाणपीठेश्वर सहितां। उड्डाणपीठेश्वर्यंबापादुकां पूजयामि।। मातृका पीठेश्वरसहितां। मातृकापीठेश्वर्यंबा पादुकां पूजयामि ।।

ॐ जालंधर पीठेश्वर। सहितां जालंधर पीठेश्वर्यं बा पादुकां पूजयामि।। ॐ कोल्हागिरि पीठेश्वर सहितां कोह्लागिरि पीठेश्वर्यंबा पादुकां पूजयामि।। ॐ मातृका पीठेश्वर सहितां जालंधर पीठेश्वर्यंबा पादुकां पूजयामि।। ॐ कोल्हागिरि पीठेश्वर सहितां। कोह्लागिरि पीठेश्वर्यबा पादुकां पूजयामि।। ॐ पूर्णगिरि पीठेश्वर सहितां। पूर्णगिरि पीठेश्वर्यंबा पादुकां पूजयामि।। ॐ संहारगिरि पीठेश्वर सहितां। संहारगिरि पीठेश्वर्यंबा पादुकां पूजयामि।। ॐ कोल्हापुरि पीठेश्वर सहितां। कोल्हपुरिपीठेश्वर्यंबा पादुकां पूजयामि।। ॐ पूर्णगिरि पीठेश्वर सहितां। पूर्णगिरि पीठेश्वर्यंबा पादुकां पूजयामि।। ॐ संहारगिरि पीठेश्वर सहितां। संहारगिरि पीठेश्वर्यंबा पादुकां पूजयामि।। ॐ कोल्हापुर पीठेश्वर सहितां। कोल्हापुर पीठेश्वर्यं बा पादुकां पूजयामि।। ॐ कामरूप पीठेश्वर सहितां। कामरूपपीठेश्वर्यं बापादुकां पूजयामि।। पुनः पूर्वादिचतुर्दिक्षु ॐ गं गणेशाय नमः।। ॐ क्षं क्षेत्रपालाय नमः।। ॐ पां पादुकाभ्यो नमः।। ॐ बं बटुकेभ्यो नमः।। आग्नेयादि दिक्षु।। ॐ जं जयायै नमः।। ॐ विं विजयायै नमः।। ॐ जं जयन्त्यै नमः।। ॐ अपराजितायै नमः।। तत्रैव ॐ अग्निमुख वेतालाय नमः।। ॐ प्रेतवाहन वेतालाय नमः।। ॐ ज्वालामुख वेतालाय नमः।। ॐ धूम्राक्षवेतालाय नमः।। ॐ कन्दाय नमः।। ॐ नालाय नमः।। ॐ दलेभ्यो नमः।। ॐ केसरेभ्यो नमः।। ॐकर्णिकाभ्यो नमः।। ॐ अं सूर्यमण्डलाय नमः ।। ॐ उं सोममण्डलाय नमः।। ॐ मं पावकमण्डलाय नमः।। ॐ अं आत्मने नमः।। ॐ उं अंतरात्मने

नमः।। ॐ पं परमात्मने नमः।। ॐ उं ज्ञानात्मने नमः।। ॐ विं विष्णुमायायै नमः।। ॐ चें चेतनायै नमः।। ॐ बुं बुध्यै नमः।। ॐ निं निद्रायै नमः।। ॐ क्षुं क्षुधायै नमः। ॐ छां छायायै नमः।। ॐ शं शक्त्यै नमः।। ॐ तृं तृष्णायै नमः।। ॐ क्षां क्षांत्यैनमः।। ॐ जां जात्यै नमः।। ॐ लं ललितायै नमः।। ॐ शान्त्यै नमः।। ॐ श्रद्धायै नमः।। ॐ कान्त्यै नमः।। ॐ लं लक्ष्म्यै नमः ।। ॐ धृं धृंत्यै नमः।। ॐ वृं वृद्धयै नमः।। ॐ स्मृं स्मृत्यै नमः।। ॐ दं दयायै नमः।। ॐ तुं तुष्ट्यै नमः।। ॐ पुं पुष्ट्यै नमः।। ॐ मां मातृकायै नमः।। ॐ भ्रां भ्रांत्यै नमः।। नवशक्तयः।। ॐ आं प्रभायै नमः।। ॐ ईंमायायै नमः।। ॐ ऊं जयायै नमः ।। ॐ एं सूक्ष्मायै नमः।। ॐ ऐं विशुद्धायै नमः।। ॐ ओं नंदिन्यै नमः।। ॐ औं सुप्रभायै नमः।। ॐ अं विजयायै नमः।। ॐ अः सर्वसिद्धिदायै नमः।। ॐ ह्रीं सर्व शक्तिकमलासनाय सर्वात्म संयोग पीठात्मने नमः।। इति पीठपूजा।। ॐ नमोभगवत्यै सकलगुणात्मिक शक्तियुतायै वज्रमुखदंष्ट्रायुधायै महासिंहाय।। हुं फट्।। यन्त्रपूजा। चतुरस्रे पूर्वदिशि ॐ उड्डाणपीठाय नमः ।। ॐ मुण्डेश्वराय नमः।। ॐ मुण्डाख्य पादुकायैनमः।। आग्नेयां।। मातृकोपपीठाय नमः।। ॐ मातृकेश्वरोपनाथाय नमः।। ॐ मातृकाख्योप पादुकायै नमः।। दक्षिणे ॐ जालन्धरपीठाय नमः।। ॐ ज्वालामुखाय नमः।। ॐ ज्वालापादुकायै नमः।। नैर्ऋत्यां ॐ कोल्लापुरोपपीठाय नमः।। ॐ कोल्लारेश्वरोप नाथाय नमः।। ॐ कोल्लाराख्योप पादुकायै नमः।। पश्चिमे ॐ पूर्णगिरीश पीठाय नमः।। ॐ पूर्णेश्वरनाथाय नमः।। ॐ पूर्णाख्यपादुकायै

नमः।। वायव्यां ॐ संहारपीठाय नमः।। ॐ संहाराख्योपपादुकायै नमः।। ॐ संहाराख्यो पनाथाय नमः।। उत्तरे ॐ ओणपीठाय नमः।। ॐ ओणकेश्वर नाथाय नमः।। ईशान्यां।। ॐ कामरूपोपपीठाय नमः।। कामेश्वरोपनाथाय नमः।। कामाख्यपीठाय नमः।। आग्नेयादिविदिक्षु ॐ अग्निमुख वेतालाय नमः।। ॐ प्रेतवाह वेतालाय नमः।। ॐ ज्वालामुखवेतालाय नमः।। ॐ धूम्राक्ष वेतालाय नमः।।अष्टदल चक्रे।। ॐ ब्राह्मै नमः।। ॐ माहेश्वर्यै नमः।। ॐ कौमार्यै नमः।। ॐ वैष्णव्यै नमः।। ॐ वाराह्यै नमः।। ॐ माहेन्द्रियै नमः।। ॐ चामुण्डायै नमः।। ॐ चण्डिकायै नमः।। अष्टदले ॐ असितांग भैरवाय नमः।। ॐ रुरुभैरवाय नमः।। ॐ चण्डभैरवाय नमः।। ॐ क्रोधभैरवाय नमः।। ॐ उन्मत्तभैरवाय नमः।। ॐ कपाल भैरवाय नमः।। ॐ भीषण भैरवाय नमः।। ॐ संहार भैरवाय नमः।।

ॐ इन्द्राय नमः।। ॐ अग्नये नमः।। ॐ यमाय नमः।। ॐ निर्ऋतये नमः।। ॐ वरुणाय नमः।। ॐ वायवे नमः।। ॐ सोमाय नमः।। ॐ ईशानाय नमः।। षट्कोणे पूर्वादिक्रमेण ॐ गुरवे नमः।। ॐ परमगुरवे नमः।। ॐ परमेष्ठिगुरवे नमः।। ॐ गणेशाय नमः।। ॐ हरये नमः।। ॐ हराय नमः।।

बाह्यत्रिकोणके चक्रे। ॐ महाकाल्यै नमः।। पृष्ठे गौरी रुद्राभ्यां नमः ।। ॐ महा लक्ष्म्यै नमः ।। पृष्ठे लक्ष्मी हृषीकेशाभ्यां नमः ।। ॐ महासरस्वत्यै नमः।। पृष्टे ॐ विरिंचि सरस्वत्यै नमः ।। दक्षिणे ॐ कालाय नमः ।। ॐ रुद्राय नमः ।।

ॐ सिंहाय नमः।। कालस्यवामे।। ॐ विजयाय नमः।। ॐ गणेशाय नमः।। ॐ महिषाय नमः ।। त्रिकोणमध्ये ॐ चण्डिकायै नमः।। दक्षिणे अधिदेवता महाकाल्यै नमः ।। दक्षिणे प्रत्यधिदेवता महासरस्वत्यै नमः ।।

## प्राण प्रतिष्ठा

अस्यश्री प्राणप्रतिष्ठापन मंत्रस्य बह्माविष्णु महेश्वरा ऋषयः ।। ऋग्यजुः सामाथर्वाणि छंदांसि। सर्वशक्त्यात्मिका प्राणशक्ति देवता। आंबीजं। ह्रीं शक्तिः ।। क्रों कीलकं। प्राण प्रतिष्ठापने विनियोगः ।। क्रीं इति बीजत्रयेण षट्कर शुध्दि व्यापक न्यासं कृत्वा।।

ॐ आं ह्रीं क्रों अं कं खं गं घं ङः पृथिव्यप्तेजो वाय्वात्मने आं अंगुष्ठाभ्यां नमः। ॐ आं ह्रीं क्रों इं चं छं जं झं ञं शब्द स्पर्शरूपगंधात्मने ईं तर्जनीभ्यां नमः ।। ॐ आं ह्रीं क्रों ऊं टं ठं डं ढं णं श्रोत्रत्वक् चक्षुजिह्वा घ्राणात्मने ऊँ मध्यमाभ्यां नमः ।।

ॐ आं ह्रीं क्रों औं तं थं दं धं नं वाक्पाणि पायूपस्थात्मने ऐं अनामिकाभ्यां नमः ।। ॐ आं ह्रीं क्रों पं फं बं भं मं वचनादानगमना नंदविर्सग आत्मने ॐ कनिष्ठिकाभ्यां नमः ।।

ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं वं क्षं मनोबुद्धि अहंकारात्मने चित्तात्मते अः करतल करपृष्ठाभ्यां नमः ।। एवंहृदयादि न्यासः।।

ॐ भूर्भुवःस्वः इति दिग्बन्धः ।। ध्यानं

रक्तांबोधिस्थ पोतोल्लसदरुण सरो जाधिरुढा कराब्जैः पाशंकोदंडमिक्षूद्भवमणिगुण मप्यंकुशं पंचबाणान् । ब्रिभ्राणा स्नक्कपालस्त्रिनयन वपुषा पीन वक्षोरुहाढ्या । देवी बालार्कवर्णा भवतुसुख करी प्राणशक्तिः परानः ।। ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं ळं क्षं हं सः सोऽहं ।। दुर्गायाः (अमुकस्य) प्राणाः इह प्राणाः ।।

ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं ळं क्षं हंसः सोऽहं दुर्गायाः (अमुकस्य) जीव इह स्थितः ।।

ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं ळं क्षं हंसः सोऽहं ।। सर्वे इंद्रियाणि मनोबुद्धि चित्ताहंकार पृथिव्यप्तेजो वायु आकाश शब्द स्पर्शरुप रसगन्ध श्रोत्रत्वक्चक्षु जिह्वा घ्राण वाक्पाणि पाद पायूपस्थवचनादान गमनानंद विसर्ग जीव प्राणाः इहागच्छंतु सुखं स्थिरं चिरं तिष्ठंतु स्वाहा ।। ततः पंचदश संस्कार सिध्यर्थं पंचदश प्रणवावृत्तिं करिष्ये ।। ॐ ॐ ॐ ।।

ॐ असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिहनो देहिभोगं जोक्पश्येम सूर्यमुच्चरंत मनुमते मृळयानः स्वस्ति पंचोपचारान् दत्वा ।।

।। अथ ध्यानं ।। कराभ्यां जलगंध पुष्पाक्षतान् गृहीत्वा ॐ दुर्गां ध्यायतु दुर्गतिप्रशमनीं दूर्वादलश्यामलां । चंद्रार्धो ज्वलशेखरां त्रिनयनां आपीत वासो वसां ।। चक्रं शंखमिषुं धनुश्चदधतीं कोदंडबाणां श्चयो । मुद्रेकाभयकामदे सकटिबद्धा भीष्टदां वामयोः ।। ॐ खड्गं चक्रगदेषु चाप

परिघात्छूलं भुषुण्डीं शिरः। शंखं संदधतींकरैः त्रिनयनां सर्वांग भूषावृतां। नीलाश्मद्युतिमास्य पाददशकां सेवे महाकालीकां।। यामस्तौत्स्वपिते हरौकमलजो हंतुं मधुं कैटभं।।

ॐ अक्षस्रक्परशुं गदेषु कुलिशं पद्मं धनुश्कुंडिकां। दण्डं शक्ति मसिं च चर्म जलजं घण्टासुराभाजनं।। शूलं पाश सुदर्शने च दधतीं हस्तैप्रसन्नाननां। सेवे सैरिभ मर्धिनी मिहमहा लक्ष्मीं सरोजस्थितां। ॐ घण्टाशूल हलानि शंख मुसले चक्रं धनुः सायकं। हस्ताब्जैर्दधतीं घनांत विलसत्च्छीतां शुतुल्यप्रभां।। गौरीदेह समुद्भवां त्रिजगतामाधार भूतांमहा पूर्वां अत्र सरस्वती मनुभजे शुंभादि दैत्यार्दिनीं। महाकाली महालक्ष्मी महासरस्वत्यं तर्गत श्री दुर्गा परमेश्वर्यै नमः।। ध्यायामि ध्यानं समर्पयामि।। ॐ हिरण्यवर्णां हरिणींo।।

एह्येहिममहृत्पद्मस्थित मुख्य प्राणान्तर्गत श्रीलक्ष्मीनारायणं दुर्गा परमेश्वरीं आवाहयामि।। आवाहनादिषणमुद्राः प्रदर्श्य आगच्छ वरदे देवी दैत्य दर्पनिषूदनी। पूजां गृहाण सुमुखी नमस्ते श्रीधरप्रिये।

सर्वतीर्थमयं वारि सर्वदेव समन्वितः।
अस्मिन् घटे समागच्छ तिष्ठ देवगणैः सह।।
दुर्गे देवी समागच्छ सानिध्यं इहकल्पय।
बलिंपूजां गृहाणत्वं अष्टभिः शक्तिभिः सह।।

जगत्पूज्ये जगद्वंद्ये सर्वशक्ति स्वरूपिणि। पूजां गृहाण कौमारि जगन्मात र्नमोऽस्तुते।। ॐ दुर्गापरमेश्वर्यै नमः।। आवाहनं समर्पयामि।। ॐ तांम आवाह जातवेदo।।

त्रिपुरां त्रिणां धात्रीं त्रिमार्ग ज्ञानरूपिणीं। त्रैलोक्यवंदिते देवी त्रिमूर्तीं पूजयाम्यहं।। आसनं समर्पयामि।।

**पंचतत्वन्यासः ।।**

ॐ षौं नमः परायै श्रेष्ठा शक्त्यात्मने नमः।। शिरसि।।

ॐ यौं नमः परायै पौरुषि शक्त्यात्मने नमः।। मुखे।।

ॐ रौं नमः परायै विश्वरूपिशक्त्यात्मने नमः।।हृदि।।

ॐ वौं नमः परायै निवृत्तिशक्त्यात्मने नमः ।। गुह्ये।।

ॐ लौं नमः परायै सर्वरूपीशक्त्यात्मने नमः।। पादयोः।।

ॐ अं नमः परायै कोपतत्वात्मक नृसिंहात्मिकायै दुर्गायै नमः ।। संर्वागे।।

**अन्तर्मातृका बहिर्मातृकान्यासः।।**

अस्य श्री अंतमार्तृका बहिर्मातृका मंत्रस्यब्रह्मा ऋषिः। गायत्रीच्छन्दः।। अंतर्मातृका बहिर्मातृका सरस्वती देवता। ब्रह्माबीजं। माया शक्तिः। जीवो बीजं। बुद्धिशक्तिः। उदानो बीजं। सुषुम्नानाडिका। सरस्वती शक्तिः। हलो बीजानि । स्वरा शक्तयः।। अन्तर्मातृका बहिर्मातृका सरस्वती देवता।। सरस्वती प्रसाद सिध्यर्थे जपेविनि योगः।।

## ।। ध्यानं।।

आधारे लिंगनाभौ प्रकटित हृदये तालुमूले ललाटे द्वे पत्रे षोडशारे द्विदश दशदले द्वादशार्धे चतुष्के। वासांते वालमध्ये डफकट सहिते कण्ठदेशेस्वराणां हंक्षं तत्वार्थयुक्तं सकल दलगतं वर्णरूपं नमामि। पंचाशद्वर्ण भेदैर्विहित

वदनदोः पादहृत्कुक्षिवक्षो। देशां भास्वत्कपर्दा कलित शशिकलामिंदुकुन्दा वदातां अक्षसृक्कुंभचिंतां। लिखितवरकरां तीक्षणां पद्मसंस्थामच्छाकल्पां उच्चस्तनजघन भरां भारतीं तां नमामि।।

करन्यासः ।।

ॐ अं कं खं गं घं ङं आं अंगुष्ठाभ्यां नमः।
ॐ इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः।
ॐ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः।
ॐ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः।
ॐ ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः।।
ॐ अं यं रं लं वं शं षं सं हं ळं क्षं अः करतल करपृष्टाभ्यांनमः
ॐ अं कं खं गं घं ङं आं ।। हृदयाय नमः।
ॐ इं चं छं जं झं ञं ईं ।। शिरसे स्वाहा।
ॐ उं टं ठं डं ढं णं ऊं ।। शिखायै वषट् ।
ॐ एं तं थं दं धं नं ऐं ।। कवचाय हुं।
ॐ ओं पं फं बं भं मं औं ।। नेत्रत्रयाय वौषट् ।
ॐ अं यं रं लं वं शं षं सं हं ळं क्षं अः ।। अस्त्रायफट् ।। आधार चक्रे चतुर्दलपद्मे वंशंषंसं एतान् चतुरो वर्णान् न्यसामि।। षट्दललिंग चक्रे बं भं मं यं रं लं एतान् षड्वर्णान्न्यसामि । नाभौ दशदलपद्मे डं ढं णं तं थं दं धं नं पं फं एतान् दशवर्णान् न्यसामि।। हृदय चक्रे द्वादशदल पद्मे कं खं गं घं ङं चं छं जं झं ञं टंठं एतान् द्वादश वर्णान् न्यसामि।। कंठचक्रे षोडशदले अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अः एतान् षोडश वर्णान् न्यसामि।।

भ्रूमध्ये चक्रेद्विदले हंक्षं वर्णौं न्यसामि ।।
ॐ अं नमः मूर्ध्नि ।। ॐ आं नमः मुखे ।। ॐ इं नमः दक्षिण नेत्रे ।। ॐ ईं नमः वामनेत्रे ।। ॐ उं नमः दक्षिण कर्णे ।। ॐ ऊं नमः वामकर्णे ।। ॐ ऋंनमः दक्षिणनासा पुटे ।। ॐ ॠं नमः वामनासापुटे ।। ॐ लृंनमः दक्षिणगंडे
ॐ ॡं नमः वामगंडे। ॐ एं नमः ऊर्ध्वोष्ठे ।। ॐ ऐं नमः अधरोष्ठे ।। ॐ ओं नमः ऊर्ध्वदंतपंक्तौ ।। ॐ औं नमः अधोदंत पंक्तौ ।। ॐ अं नमः मूर्ध्नि ।। ॐ अः नमः जिह्वायां ।। ॐ कं खं गं घं ङं दक्षिण हस्त संध्यग्रेषुन्यसामि ।। ॐ चं छं जं झं ञं वामहस्त संध्यग्रेषु न्यसामि ।। ॐ टं ठं डं ढं णं दक्षिणपाद संध्यग्रेषु न्यसामि ।। ॐ तं थं दं धं नं वामपाद संध्यग्रेषु न्यसामि ।। ॐ पं नमः दक्षिणपार्श्वे ।। ॐ फं नमः वामपार्श्वे ।। ॐ बं नमः पृष्ठे ।। ॐ भं नमः नाभौ ।। ॐ मं नमः उदरे ।। ॐ यं नमः सत्वगात्मने। हृदये ।। ॐ रं नमः असृगात्मने। दोर्मूले ।। ॐ लं नमः मांसात्मने। ककुदि ।।ॐ वं नमः मेधात्मने। कक्षद्वये ।। ॐ शं नमः ।। हृदयादि। हस्तयुगले ।। ॐ षं नमः मज्जात्मने। हृदयादि पादयुगले ।। ॐ सं नमः शक्त्यात्मने। जठरे ।। ॐ हं नमः प्राणात्मने। मुखे ।। ॐ क्षं नमः जीवात्मने। सर्वशरीरेषुन्यसामि ।। चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणाये मनीषिणः ।। गुहात्रिणि निहितानेंगयंति तुरीयं वाचं मनुष्या वदंति। तत्वन्यासं कृत्वा

## नवार्ण मंत्र न्यासः

अस्य श्री नवार्णमंत्रस्य ब्रह्माविष्णुरुद्रा ऋषयः।। गायत्र्युष्णिगनुष्टुप् छदांसि ।। श्रीमहाकाली महालक्ष्मी महा

सरस्वत्यो देवता।। नंदाशाकंभरी भीमाः शक्तयः।। रक्तदंतिका दुर्गाभ्रामर्यो बीजानि।। अग्निः वायुर्सूर्याःतत्वानि।। श्री चंडिका परमेश्वरी प्रीत्यर्थं जपे विनियोगः।। ऋष्यादिन्यासः।।

ब्रह्मविष्णुरुद्र ऋषिभ्यो नमः। शिरसि।।

गायत्र्युष्णिक् अनुष्टुप् छंदोभ्यो नमो। मुखे।। श्री महाकाली महालक्ष्मी महासरस्वती देवतायै हृदये।। नंदाशाकंभरी भीमा शक्तिभ्यो नमो। दक्षिणस्तने।। रक्तदंतिका दुर्गा भ्रामरी बीजेभ्यो नमो।। वामस्तने।।

अग्निर्वायुर्सूर्यास्तत्वेभ्यो नमो। नाभौ। जपेविनियोगः ।।

**करन्यासः**

ॐ ऐं नमः अंगुष्टाभ्यां नमः।।

ॐ ह्रीं नमः तर्जनीभ्यां नमः।।

ॐ क्लीं नमः मध्यमाभ्यां नमः।।

ॐ चामुण्डायै अनामिकाभ्यां नमः।।

ॐ विच्चे कनिष्टिकाभ्यां नमः।।

ॐ ऐह्रीं क्लीं चामुण्डायै विच्चे करतल करपृष्टाभ्यां।

**षडंगन्यासः**

ॐ ऐं हृदयाय नमः।।

ॐ ह्रीं शिरसे स्वाहा।।

ॐ क्लीं शिखायै वषट्।।

ॐ चामुण्डायै कवचाय हुं।।

ॐ विच्चे नेत्रत्रयाय वौषट् ।।

ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे अस्त्राय फट्।।

**अक्षर न्यासः** ॐ ऐं नमः शिखायां ।।
ॐ ह्रीं नमः दक्षिण नेत्रे ।।
ॐ क्लीं नमः वामनेत्रे ।।
ॐ चां नमः  दक्षिण कर्णे ।।
ॐ मुं नमः वामकर्णे ।।
ॐ डां नमः दक्षिण नासायां ।
ॐ यै नमः वाम नासायां ।
ॐ विं नमः मुखे ।।
ॐ च्चें नमः गुह्ये ।।
मूलेन अष्टवारं व्यापकं कृत्वा ।। **दिंग्न्यासः ।**
ॐ ऐं प्राच्यै नमः ।। ॐ ऐं आग्नेय्यै नमः ।।
ॐ ह्रीं दक्षिणायै नमः ।। ॐ ह्रीं नैर्ऋत्यै नमः ।।
ॐ क्लीं प्रतीच्यै नमः ।। ॐ क्लीं वायव्यै नमः ।।
ॐचामुंडायै उदीच्यै नमः।। ॐ चामुण्डायै ऐशान्यै नमः।।
ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे ऊर्ध्वायै नमः ।।
ॐ ऐं ह्रीं क्ली चामुणाडै विच्चै भूम्यै नमः ।।
ध्यानं कृत्वा ।। यथाशक्ति मूलमंत्रं जपेत् ।।

--0--

## दुर्गामूलमन्त्रन्यासः

अस्य श्री दुर्गामूलमंत्रस्य नारदऋषिः ।। गायत्री छन्दः ।।
मूलदुर्गादिवता न्यासे, जपे विनियोगः ।।
ॐ ह्रां दुं दुर्गायै हृदयाय नमः ।।
ॐ ह्रीं दुं दुर्गायै शिरसे स्वाहा ।।
ॐ ह्रूं दुं दुर्गायै शिखायै वषट् ।।

ॐ ह्रैं दुं दुर्गायै कवचाय हुं ।।
ॐ ह्रौं दुं दुर्गायै नेत्रत्रयाय वौषट् ।।
ॐ ह्रः दुं दुर्गायै अस्त्रायफट् ।। ॐ भूर्भुवः स्वरों दिग्बन्धः ।।
वर्णन्यासः ।।
ॐ ॐ नमः मूर्ध्नि ।। ॐ ह्रीं ॐ नमः नेत्रयोः ।।
ॐ दुं ॐ नमः हृदि ।। ॐ र्गां ॐ नमः नाभौ ।।
ॐ यैं ॐ नमः गुह्ये ।। ॐ नं ॐ नमः जान्वोः ।।
ॐ मं ॐ नमः पादयोः ।। ध्यानं उक्त्वा यथा शक्ति मूलं मंत्रं जप्त्वा ।। ॐ ह्रीं दुं दुर्गायै नमः ।।

--o--

## विशेष संग्रहः

## अथएकादशन्यासाः

### मातृकान्यासः

ॐ अं नमः मूर्ध्नि ।। ॐ आं नमः ललाटे ।। ॐ इं नमः दक्षनेत्रे ।। ॐ ईं नमः वामनेत्रे ।। ॐ उं नमः दक्षकपोले ।। ॐ ऊँ नमः वामकपोले । ॐ ऋं नमः दक्षश्रुतौ । ॐ ॠं नमः वामश्रुतौ ।। ॐ लृं नमः दक्षनासायां । ॐ लॄं नमः वामनासायां ।। ॐ एं नमः ऊर्ध्वोष्टे ।। ॐ ऐं नमः अधरोष्टे ।। ॐ ओं नमः ऊर्ध्वदन्तपंक्तौ ।। ॐ औं नमः अधोदन्तपंक्तौ । ॐ अं नमः जिह्वायां ।। ॐ अः नमः तालुके ।। ॐ कं नमः दक्ष बाहौ । ॐ खं नमः दक्ष कूर्परि । ॐ गं नमः दक्षमणिबन्धे ।। ॐ घं नमः दक्षांगुलि मूले ।। ॐ ङं नमः दक्षांगुल्यग्रे ।। ॐ चं नमः वामबाहुमूले ।। ॐ छं नमः वाम कूर्परे ।। ॐ जं नमः तन्मणिबन्धे ।। ॐ झं नमः वामांगुलि मूले ।। ॐ ञं नमः

तदंगुल्यग्रे ॥
ॐ टं नमः दक्षोरुमूले ॥ ॐ ठं नमः दक्षजानुनि ॥ ॐ डं नमः दक्षगुल्फे ॥ ॐ ढं नमः दक्षपादांगुलिमूले ॐ णं नमः तत्पादांगुलि अग्रे ॥

ॐ तं नमः वामपादो मूले ॥ ॐ थं नमः वाम जानुनि ॥ ॐ दं नमः वामगुल्फे ॥ ॐ धं नमः वामपाद अंगुलिमूले ॥ ॐ नं नमः तत्पादांगुलि अग्रे ॥
ॐ पं नमः दक्षपार्श्वे ॥ ॐ फं नमः वामपार्श्वे ॥ ॐ बं नमः पृष्ठे ॥ ॐ भं नमः नाभौ ॥ ॐ मं नमः जठरे ॥ ॐ यं त्वगात्मने नमः हृदये ॥ ॐ रं असृगात्मने नमः दक्षांसे ॥ ॐ लं मांसात्मने नमः ककुदि ॥ ॐ वं स्नाऽवात्मने नमः वामांसे ॥ ॐ शं अस्थ्यात्मने नमः हृदयादि दक्षहस्तान्तं ॥ ॐ षं मज्जात्मने नमः हृदयादि वामहस्तान्तं ॥ ॐ सं मेदाात्मने नमः हृदयाद्दक्षपादान्तं ॥ॐ हं पूयात्मने नमः हृदयादिवामपादान्तं ॥ ॐ ळं प्राणात्मने नमः पादादिहृदयान्तं ॥ ॐ क्षं जीवात्मने नमः हृदयादि शिरोन्तं ॥ इति देवसारूप्य प्रदः प्रथमः मातृकान्यासः ॥

**अथ सारस्वतन्यासः**

ॐ ऐं ह्रीं द्वीं क्लीं नमः कनिष्ठयोः ॥
ॐ ऐ ह्रीं क्लीं नमः अनामिकयोः ॥
ॐ ऐ ह्रीं क्लीं नमः मध्यमयोः ॥
ॐ ऐं ह्रीं क्लीं नमः तर्जन्योः ॥
ॐ ऐं ह्रीं क्लीं नमः अंगुष्ठयोः ॥
ॐ ऐं ह्रीं क्लीं नमः मणिबन्धयोः ॥

ॐ ऐं ह्रीं क्लीं नमः हृदये॥
ॐ ऐं ह्रीं क्लीं नमः शिरसि॥
ॐ ऐं ह्रीं क्लीं नमः शिखायां॥
ॐ ऐं ह्रीं क्लीं नमः कवचे ॥
ॐ ऐं ह्रीं क्लीं नमः नेत्रयोः ॥
ॐ ऐं ह्रीं क्लीं नमः करतलपृष्ठयोः॥
ॐ ऐं ह्रीं क्लीं नमः पूर्वे ॥
ॐ ऐं ह्रीं क्लीं नमः आग्नेये ॥
ॐ ऐं ह्रीं क्लीं नमः दक्षिणे ॥
ॐ ऐं ह्रीं क्लीं नमः नैर्ऋत्ये॥
ॐ ऐं ह्रीं क्लीं नमः पश्चिमे ॥
ॐ ऐं ह्रीं क्लीं नमः वायव्ये ॥
ॐ ऐं ह्रीं क्लीं नमः उत्तरे ॥
ॐ ऐं ह्रीं क्लीं नमः ईशान्ये ॥
ॐ ऐं ह्रीं क्लीं नमः ऊर्ध्वे ॥
ॐ ऐं ह्रीं क्लीं नमः अधः ॥इतिद्वितीयः॥

**जाड्यविनाशको सारस्वतन्यासः ॥**

अथ मातृगणन्यासः

ॐ ह्रीं ब्राह्मी पूर्वस्यां मां पातु ॥
ॐ ह्रीं माहेश्वरी आग्नेय्यां मां पातु ॥
ॐ ह्रीं कौमारी दक्षिणस्यां मां पातु ॥
ॐ ह्रीं वैष्णवी नैर्ऋत्यां मां पातु ॥
ॐ ह्रीं वाराही पश्चिमायां मां पातु ॥
ॐ ह्रीं इंद्राणी वायव्यां मां पातु ॥

ॐ ह्रीं चामुंडा उत्तरस्यां मां पातु ॥
ॐ ह्रीं महालक्ष्मीरैशान्यां मां पातु ॥
ॐ ह्रीं व्योमेश्वरी ऊर्ध्वं मां पातु ॥
ॐ ह्रीं सप्तद्वीपेश्वरी भूमौं मां पातु ॥
ॐ ह्रीं कामेश्वरी पाताले मां पातु ॥ इति तृतीयः मातृगणन्यासस्त्रैलोक्य विजय प्रदः ॥

## अथषड्देवीन्यासः

ॐ कमलांकुश मंडिता नंदजा पूर्वांगं मे पातु।
ॐ खड्गपात्रधरा रक्तदंतिका दक्षिणांगं मे पातु॥
ॐ पुष्पपल्लवसंयुता शाकंभरी पश्चिमांगं मे पातु॥
ॐ धनुर्बाणकरा दुर्गा वामांगं मे पातु॥
ॐ शिरः पात्रकरा भीमा मस्तकाच्चरणावधिमांपातु॥
ॐ चित्रकांतिभृध्भ्रामरी पादादि मस्तकांतं मे पातु॥
इति जरामृत्युहरो षड्देवीन्यासः चतुर्थः॥

## अथ ब्रह्मादिन्यासः

पादादिनाभिपर्यंतं ब्रह्मामां पातु॥
नाभे र्विशुद्धिपर्यंतं जनार्दनो मां पातु॥
विशुद्धे ब्रह्मरंध्रांतं रुद्रो मां पातु॥
हंसो मे पदद्वयं पातु॥
वैनतेयः करद्वयं मे पातु॥
वृषभश्चक्षुषी मे पातु॥ गजाननः सर्वांगं मे पातु॥ आनंदमयो हरिः परापरौ देहभागौ मे पातु॥ इति सर्वकामप्रदो ब्रह्मादिन्यासः पंचमः।

## अथ लक्ष्म्यादिन्यासः

अष्टादशौभुजा लक्ष्मी र्मध्यभागं मे पातु॥

अष्टभुजा महासरस्वती ऊर्ध्वभागं मे पातु॥

दशभुजा महाकाली अधोभागं मे पातु॥

सिंहो हस्तद्वयं पातु परहंसोऽक्षियुगं मे पातु॥

महिषारूढो यमः पदद्वयं मे पातु॥

महेशश्चंडिकायुक्तः सर्वागं मे पातु॥

इति महालक्ष्म्यादिन्यासः सद्गतिप्रदः षष्ठः॥

## अथमंत्रबीजन्यासः

ॐ ऐं नमः ब्रह्मरंध्रे॥ ॐ ह्रीं नमो दक्षिण नेत्रे॥ ॐ क्लीं नमो वामनेत्रे॥ ॐ चां नमो दक्षिणकर्णे॥ ॐ मुंनमो वामकर्णे। ॐ डां नमो दक्षिणानासापुटे॥ ॐ यैं नमो वामनासापुटे॥ ॐ विं नमो मुखे॥ ॐ च्चें नमो गुह्ये॥इति मूलाक्षरन्यासः रोगक्षयकरः सप्तमः॥

## अथाष्टमन्यासः

ॐ च्चें नमो गुह्ये॥ ॐ विं नमो मुखे॥ ॐ यैं नमो वामनासा पुटे॥ ॐ डां नमो दक्ष नासापुटे॥ ॐ मुंनमो वामकर्णे॥ ॐ **चां नमो दक्षिणकर्णे**॥ ॐ क्लीं नमो वामनेत्रे॥ ॐ ह्रीं नमो दक्षिण नेत्रे। ॐ ऐं नमो ब्रह्मरन्ध्रे॥ इति विलोमाक्षरन्यासः सर्व दुःख विनाशकोष्टमः।

## अथ मंत्रन्यासः

ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे मस्तकाच्चरणपर्यन्तं पूर्वांगे॥ ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे मस्तकाच्चरणावधि दक्षिणांगे॥

ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे मस्तकाच्चरणावधि पृष्ठे ।।
ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे मस्तकाच्चरणा वधिवामांगे ।।
ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे मस्तकात्पादान्तं ।।
ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे पादादिशिरोन्तं ।।
इति देवताप्राप्तिकरो मूलव्यापकन्यासः नवमः ।।

## अथ दशमन्यासः

ॐ ऐं ह्रीं क्लीं चामुंडायै विच्चे हृदयाय नमः ।।
ॐ ऐं ह्रीं क्लीं चामुंडायै विच्चे शिरसे स्वाहा ।।
ॐ ऐं ह्रीं क्लीं चामुंडायै विच्चे शिखायै वषट्।।
ॐ ऐं ह्रीं क्लीं चामुंडायै विच्चे कवचायहुं।।
ॐ ऐं ह्रीं क्लीं चामुंडायै विच्चे नेत्रत्रयाय वौषट् ।।
ॐ ऐं ह्रीं क्लीं चामुंडायै विच्चे अस्त्राय फट् ।। इति मूलषडंगन्यासः त्रैलोक्य वशकरो दशमन्यासः ।

## अथ सूक्तादि बीजत्रयन्यासः

**खड्गिनी**शूलिनी घोरा गदिनी चक्रिणी तथा।
शंखिनी चापिनी बाणा भुशुंडी परिघायुधा ।।
सौम्यासौम्य तराशेष सौम्येभ्य स्त्वति सुंदरी ।।
परापराणां परमा त्वमेव परमेश्वरी ।।
यच्च किंचित्क्वचिद्वस्तु सदसद्वाखिलात्मिके ।
तस्य सर्वस्य याशक्तिः सा त्वं किंस्तूयते मया ।।
यया त्वया जगत्सृष्टा जगत्पात्यत्ति यो जगत् ।।
सोपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ।।
विष्णुः शरीरग्रहणमहमीशान एव च ।
कारितास्ते यतोतस्त्वां कः स्तोतुं शक्तिमान्भवेत् ।।

आद्यं वाग्बीजं(एं)कृष्णतरं ध्यात्वा संर्वागे विन्यसामि।। इति संर्वागे विन्यसेत् ।।
शूलेन पाहिनो देवि पाहि खड्गेन चांबिके। घंटास्वनेन नः पाहि चापज्या निःस्वने च।। प्राच्यां रक्ष प्रतीच्यां च चंडिके रक्ष दक्षिणे। भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि।। सौम्यानि यानिरूपाणि तैलोक्ये विचरंति ते। यानि चात्यंतघोराणि तै रक्षास्मांस्तथा भुवं।। खड्गशूल गदादीनि यानि चस्त्राणितें ऽबिके।। करपल्लवसंगीनि तैरस्मान्रक्ष सर्वतः।। द्वितीयं मायाबीजं ह्रीं सूर्यसद्रृशं ध्यात्वासर्वांगे।।
सर्वस्वरूपे सर्वेशे सर्वशक्ति समन्विते।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोस्तुते।। एतत्ते वदनं सौम्यं लोचनत्रयभूषितं। पातुनः सर्वभीतिभ्यः कात्यायनि नमोऽस्तुते।। ज्वाला करालमत्युग्रमशेषा सुरसूदनं। त्रिशूलं पातु नो भीते र्भद्रकालि नमोऽस्तुते। हिनस्ति दैत्य तेजांसि स्वनेनापूर्य या जगत् । साघंटा पातुनो देवि पापेभ्योनः सुतानिव।। असुरासृग्वसापंक चर्चितस्ते करो ज्ज्वलः। शुभायखड्गो भवतु चंडिके त्वां नता वयं।। तृतीयं काम बीजं (क्लीं) स्फटिकाभं ध्यात्वासर्वांगे विन्यसामि ।। इति विन्यसेत्।। इतिसूक्तादि बीज त्रयन्यासः पंचमः सर्वानिष्टहरः सर्वाभीष्टदः सर्वरक्षाकरः श्चैकादशः।। नन्तरं मूलषडंगन्यासः।

----000---

# कुण्डसंस्कारादिकं

तत्रादौ कुण्डमध्य भूमिं दर्भमुष्टिना मायाबीजेन संमार्ज्य।। माया बीजेनैव गोमयेनोपलिप्य ।। स्रुवमूलेन प्रागग्राः तिस्रो रेखाः दक्षिणमध्योत्तरेषु मायाबीजेन विलिख्य।। मायाबीजेनैव रेखा मध्यात्पांशु उद्धृत्य बहिर्निरस्य।। मायाबीजेनैव कुण्डमभ्युक्ष्य।। मायाबीजमुच्चार्य अमुक कुण्डाय नमः।। इति कुंडं गंधादिभिः संपूज्य।। अस्त्र मंत्रेणास्त्रमुद्रया कुण्डं संरक्ष्य।। कवचबीजेना वगुण्ठ नमुद्रयावगुण्टनं कुर्यात् इत्यष्टभिः संस्कारैः कुंण्डं संकृत्य यन्त्रपूजनं। मेखलापूजनं। अग्नि प्रतिष्ठापनं। ब्रह्मावरणं इत्यादिकं कृत्वा।। कुण्डं नवगुणेन सूत्रेणसंवेष्टय कुण्डस्योत्तर भागे प्रागग्रान् दर्भानास्तीर्य। प्रणीताप्रोक्षणी पात्रे आज्यस्थाली स्रुक्स्रुवौ कुशपूलकं पालाशमयं परिधि त्रयं।। द्वात्रिंशत्पलनिर्मितं ताम्रमयं पूर्णपात्रं चेति एवं पात्रासाधनादिकं कृत्वा।।

उल्लेखनादि शतमंगल नामानमग्निं प्रतिष्ठाप्य।। होमंगत्वेन अन्वाधानं करिष्ये।। अस्मिन् चण्डिका सप्तशती होमे।। अत्र देवतापरि ग्रहार्थं अस्मिन्नान्वाहिते अग्नौ जातवेदसमग्निं इध्मेन प्रजापतिं प्रजापतिं चाघार देवते आज्येत।। अग्नीषोमौ चक्षुषी आज्येन।। अत्रप्रधानं।। नवार्ण मत्रेण अष्टोत्तर शतवारं आज्येन।। दुर्गामूल मंत्रेण अष्टोत्तर शतवारं आज्येन ।। दुर्गा गायत्र्या अष्टोत्तर शतवारं आज्येन।। श्री सूक्तेन प्रतिऋग्भिः अष्टवारं आज्येन।। पंचदुर्गामंत्रैः प्रतिमंत्रं आज्येन चतुर्वारं।। रात्रिसूक्तस्य प्रतिऋग्भिः आज्येन।।

दुर्गागायत्र्या आज्येन प्रधानं ।। महाकालीप्रीतये मार्कंडेय पुराणोक्तदेवी स्तोत्रमंत्रस्य सावर्णि इत्यारभ्य भूयः श्रृणुवदामिते इति पर्यत चतुरोत्तर शतवारं ।। (१०४)

महालक्ष्मी प्रीतये देवासुर इत्यारभ्य कथयामि ते इति पर्यंत पंचपंचाशत् शतवारं ।। (१५५) महासरस्वती प्रीतये पुराशुंभ इत्यारभ्य सावर्णिभवि तामनु इत्यन्तं एक चत्वारिशत् उत्तर चतुः शतवारं ।। (४४१) तिलमिश्रपायसेन प्रति उवाचमंत्रै पूगीफलताम्बूल कदली फलैः प्रति चरित्रस्य पूर्वाज्य पराज्येन प्रति अध्यायस्य अन्ते लघु पूर्णाहुत्या यक्ष्ये ।। पुनः मूल मंत्रेण तैरेव द्रव्यै १०८ वारं ।। पीठावरण देवताश्चै कैकाहुत्या ।। शेषेण स्विष्टकृतं ।। चक्षुष्यंतं होम कृत्वा ।। पायसनिर्वापण काले ।। दुर्गायै त्वां जुष्टं प्रोक्ष्यामि त्वां जुष्टं निर्वपा मितिनिर्वापणं कुर्यात् ।। चक्षुष्यंतं हुत्वा ।। अर्गलकीलकं कवचमंत्रैः हुत्वा ततः चरित्रत्रय मंत्रैः हवनं ।। रक्तचंदनोदकेन तत्तन् चरित्रदेवतानां तर्पणं ।। रक्तपाटल पुष्पेन पुष्पांजलि प्रधानं ।। प्रतिश्लोके नमस्कार कृत्वा ।।

----000---

## अथ महाहुतिः

### चरित्रस्य प्रारंभ काले

ॐ खड्गंचक्रगदेषु चापपरिघाञ्छूलं भुशुंडीं शिरः शंखं संदधतीं करैः त्रिनयनां सर्वांग भूषावृतां ।। नीलाश्मद्युतिमास्य पाददशकां सेवे महाकालिकां यामस्तौ स्वपिते हरौ कमलजो हं तुं मधुं कैटभं ।। ॐ सीं हुं सुख प्रदंश वक्त्रे दशभुजे दशपादञ्जन प्रभे त्रिंशल्लोचन मालिनि स्फुरद्दन दंष्ट्रे

भीमरूपे स्वरूपे महातामसि योगनिद्रे हरेः प्रभोद कारिणि महा मधुकैटभ नाशिनि चराचर वशीकरिणि महामोहपटल विध्वंसिनि सर्वसौख्य प्रदे भगवति नमः स्वाहा।। अध्यायस्य अन्तेलघु पूर्णाहितिः।।। (१) ॐ नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणतास्मताम्।। सांगायै सपरिवारायै सवाहनायै सायुधायै **वाग्भव बीजाधिष्ठात्र्यै** महाकाल्यै महाहुतिं समर्पयामि नमः स्वाहा।। **कपित्थफलं।**

## द्वितीय चरित्रस्य प्रारंभकाले

अक्षस्रक्परशुं गदेषु कुलिशं पद्मंधनुश्कुंडिकां दंडं शक्तिमसिं च चर्म जलजं घण्टां सुरा भाजनं।। शूलंपाश सुदर्शने च दधतीं हस्तै प्रसन्नाननां सेवेसैरिभ मर्दिनी मिहमहा लक्ष्मीं सरोजस्थितां।। ॐ श्रीं श्रीं अष्टादश वक्त्रे अष्टादश पादांजनप्रभे चतु पंचाशल्लोचने स्फुरद्वदन दंष्ट्रे भीमरूपे महाराजसे महालक्ष्मी महासेना महिषासुरनाशिनी देवी समस्त चराचर वशीकरिणि महामोहपटल विध्वंसिनि सर्वसौभाग्य प्रदे भगवति नमः स्वाहा।

।। (२) ॐ नमो देव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै लक्ष्मी बीजाधिष्ठात्र्यै महाहुतिं समर्पयामि नमः स्वाहा।। नारीकेलफलं।।

(३) ॐ नमो देव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै **अष्टाविंशति वर्णात्मिकायै** महालक्ष्म्यै महाहुतिं समर्पयामि नमः स्वाहा **मधुपुष्पं**।।

(४) ॐ नमो देव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै त्रिवर्णात्मिकायै शक्ति लक्ष्म्यै महाहुतिं समर्पयामि नमः स्वाहा।। **पूगीफलं**।।

।।। (५) ॐ नमों देव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै **विष्णुमायादि त्रयोविंशति देवतायै०** महाहुतिं समर्पयामि नमः स्वाहा।। **बीजापूरफलं।**

## तृतीय चरित्रस्य प्रारंभकाले

ॐ घण्टाशूल हलानिशंख मुसले चक्रं धनुः सायकं। हस्ताब्जै र्दधतीं घनांतविलसत्छीतांशु तुल्यप्रभां।। गौरीदेह समुद्भवां त्रिजगतां आधार भूतां महापूर्वामत्रसरस्वतीमनुभजे शुंभादि दैत्यार्दिनीं।। ॐ श्रीं ह्रीं क्लीं अष्टवक्त्रे अष्ट पादांजनप्रभे चतुविंश ल्लोचनमालिनि स्फुरद्वदन महामाये देवि प्रादुर्भावो नाम धूम्रलोचन चण्डमुण्ड रक्तबीज निशुंभ शुंभ नाशिनि देवस्तुत देवी महात्म्यफलसुरथवर प्रदानं नाम चराचर वशी करिणि महामोहपटल विध्वंसिनि सर्वसौख्य प्रदे भगवति नमः स्वाहा।

(६) नमो देव्यै महादेव्यै० संगायै सपरिवारायै सवाहनायै सायुधायै **शताक्ष्यै धूम्राक्ष्यै** महाहुतिं समर्पयामि नमः स्वाहा ।। **नारिंगफलं**।।

(७) नमो देव्यै महादेव्यै० सांगायै सपरिवारायै स वाहनायै सायुधायै **कर्पूरबीजाधिष्ठात्र्यै काली चामुण्डायै** देव्यै महाहुतिं समर्पयामि नमः स्वाहा।। **कूष्माण्डफलखंडं** ।।

(८) ॐ नमो देव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै **रक्ताक्ष्यै देव्यै** महाहुतिं समर्पयामि नमः स्वाहा । **(इक्षु दंड खंड)**

(९) ॐ नमो देव्यै महादेव्यै० सांगायै सपरिवारायै सायुधायै **वाग्भव बीजाधिष्ठात्र्यै** महाकाल्यै महाहुतिं समर्पयामि नमः स्वाहा।। **कूष्मांडखंड इक्षुदण्डखंडं**

(१०) ॐ नमोदेव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै **सिंहवाहनायै त्रिशूलपाश धारिण्यै** महाहुतिं समर्पयामि नमः स्वाहा।। **(मातुलिङ्ग फलं)**

(११) ॐ नमोदेव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै **सर्व नारायण्यै** महाहुतिं समर्पयामि नमः स्वाहा।। **(दाडिमफलं)**

(१२) ॐ नमो देव्यै महादेव्यै- सांगायै सपरिवारायै स वाहनायै सायुधायै **बाला त्रिपुरसुन्दर्यै** महाहुतिं समर्पयामि नमः स्वाहा।। **बिल्वफलं।।**

(१३) ॐ नमो देव्यै महादेव्यै० सांगायै सपरिवारायै सवाहनायै सायुधायै० श्री त्रिपुर सुंदर्यै श्री विद्यायै महाहुतिं समर्पयामि नमः स्वाहा।। **कदळीफलं।।**

# चिन्तनसंग्रहः

**योगियाज्ञवल्क्यः**

दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा। अर्चितं स्याज्जगदिदं तेन सर्वे चराचरम्।। **पञ्चामृतपूजामन्त्राः** (शिवपुराणे)-पूजयेत्परया भक्त्या ह्युपचारैरनेकशः। प्रयोगादि विधायैव कामनां विनियुज्य च।। पञ्चद्र व्यैश्च प्रथमं पूजनीयो महेश्वरः। दुग्धं दधिमधुसर्पिःशर्कराणां क्रमेण च।। तस्य तस्य च मन्त्रेण तत्तद्रद्द्रव्यं समर्पयेत् ।। इति। तस्य तस्य मन्त्रेण पयः पृथिव्याम् इत्यादिदुग्धादिमन्त्रेण इत्यर्थः। स्नानादिपात्रेषु प्रक्षेपणीयाः पदार्थाः।। **मन्त्रतन्त्रप्रकाशे** ।। अक्षता गन्धपुष्पाणि स्नानपात्रे तथा त्रयम्। द्रव्याभावे प्रदातव्याः क्षालितास्तण्डुलाः शुभाः।। पाद्यपात्रम् **शारदातिलके** दूर्वा च विष्णुक्रान्तां च श्यामाकं पद्ममेव च। पाद्याङ्गानि च चत्वारि कथितानि समासतः।। **अर्घ्यद्रव्याणि** (तत्रैव) गन्ध पुष्पाक्षतयवकुशाग्रतिलसर्षपैः। सदूर्वैः सर्वदेवानामेतदर्घ्यमुदीरितम् ।। (भविष्येपि) आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा। यवाः सिद्धा र्थकश्चैव अर्घ्योष्टाङ्गः प्रकीर्तितः।। **आचमनीयद्रव्याणि**-कर्पूरमगुरुं पुष्पं दद्याज्जातीफलं मुने। लवङ्गमपि कङ्कोलं शस्तमाचमनीयके ।। **मधुपर्कद्रव्याणि** - सुधाणुना ततः कुर्यान्मधुपर्कं मुखाम्बुजे। आज्यं दधिमधून्मि श्रमेतदुक्तं मनीषिभिः। तेनैव मनुना कुर्याददद्भिराच मनीयकम्। पंचामृतं-गव्यमाज्यं दधिक्षीरं माक्षिकंशर्करा।। **पञ्चगव्यम्** - पञ्चगव्यं पवित्रं तु आहरेत्ताम्रभाजने। गायत्र्या चैव गोमूत्रं गन्धद्वारेण

गोमयम्।। आप्यायस्वेति च क्षीरं दधिक्राव्णोति वै दधि। तेजोसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम्।। एभिश्च पञ्चद्रव्यैस्तु पञ्चगव्यं प्रचक्षते।। **विष्णुधर्मे** -गोमूत्रं भागतश्चार्द्धे शकृत्क्षीरस्य च त्रयम्। द्वयं दध्नो घृतस्यैकमे कश्च कुशवारिजः स्नानम्-गन्धाद्भिः कारयेत्स्नानं वाससी परिधापयेत्। दद्याद्दिव्योपवीतं च हाराद्याभरणैः सह।। **उद्वर्तनद्रव्याणि** रजनी सहदेवी च शिरीषं लक्ष्मणापि च। सह्न भद्रा कुशाग्राणि उद्वर्तनमिहोच्यते।। **सौभाग्यद्रव्याणि**- हरिद्रा कुङ्कुमं चैवसिन्दूरा दिसमन्वितम्। कज्जलं कंठसूत्रादि सौभाग्यद्रव्यमुच्यते ।। **कौतुकद्रव्याणि** (भविष्ये) दूर्वा यवाङ्कुराश्चैव बालकं चूतपल्लवः। हरिद्राद्वय सिद्धार्थे शिखिपत्रोरगत्वचः ।। कङ्कमौषधयश्चैताः कौतुकाख्या दश स्मृताः।। **गन्धानुलेपनविचारः** (कालिकापुराणे) चूर्णीकृतो वा घृष्टो वा दाहकर्षित एव वा।। रसः संमर्दजो वापि प्राण्यंङ्गोद्भवा एव वा।। गन्धः पञ्चविधः प्रोक्तो देवानां प्रीतिदायकः। **गंधलक्षणानि** गंधचूर्णे गंधपत्रचूर्णे सुमनसां तथा। प्रशस्तगंध उक्तानि पत्रचूर्णानि यानि च।। तानि गंधाह्वयानि स्युः स गन्धः प्रथम स्मृतः।। घृष्टो मलयजो गन्धः सरलश्च नमेरुणा। अगुरुप्रभृतिश्चापि यस्य पङ्कः प्रदीयते।। घृष्ट्वा स घृष्टो गन्धोयं द्वितीयः परिकीर्तितः।। देवदार्व गुरुब्रह्म सालसारान्तचन्दनाः। प्रियादीनां च योदग्ध्वा गृह्यते दाहजो रसः।। स दाहकर्पितो गन्धस्तृतीयः परिकीर्तितः ।। स गन्धः कारवी बिल्वं गन्धिनी तिलकं तथा। प्रभृतीनां रसो योसौ निष्पीड्य स संमद्रोद्भवा

गन्धः संमर्दज इतीर्यते ।। गुरु-पारस, ब्रह्म = पारस, पीपल, कारवी = वोंवो, गंधिनी = तालीसपत्र परिगृह्यते ।। मृगनाभिसमुद्भूत तस्तत्कोशोद्भव एव च । गन्धः प्राण्यङ्गजः प्रोक्तो मोददः स्वर्गवासिनाम् ।। सर्वेषु गन्धजातेषु प्रशस्तो मलयोद्भवः ।। तस्मात्सर्वप्रयत्नेन दद्यान्मलयजं सदा ।। देवभेदेन गन्धास्तत्रैव - कृष्णागुरुःसकर्पूरः सहितो मलयोद्भवै । वैष्णवप्रीतिदो गन्धः कामाख्यायाश्च भैरवे ।। कुङ्कुमागुरुकस्तूरी चन्द्रभागैः समीकृतैः । त्रिपुराप्रीतिदो गन्धस्तथा चण्ड् याश्च शम्भुना ।। **शारदातिलके तु** गन्धाष्टकं **तत्त्रिविधं** ।। शक्ति विष्णुशिवात्मकम्। चन्दनागुरुकर्पूर चौरकुङ्कुमरोचनाः।। जटामांसीकपियुताः शक्ते र्गन्धाष्टकं विदुः।। चन्दना गुरुह्रीवेर कुष्ठकुङ्कुमसेव्यकाः। जटामांसी मुरमिति विष्णोर्गन्धाष्टकं विदुः ।। चन्दना गुरुकर्पूरतमालजलकुङ्कुमम्। कुशीतं कुष्ठसंयुक्तं शैवं गन्धाष्टकं विदुः ।। **गन्धदाने अङ्गुलीविचारः** - अनामिक्या च देवस्य ऋषीणां च तथैव च । चौर = कचूर कपि = रक्तचन्दन, सेव्यक = उशीर, (बन्नाळो) गन्धानुलेपनं कार्यं प्रयत्नेन विशेषतः ।। पितृणामर्पयेद्गन्धं तर्जन्या च सदैव हि। तथैव मध्यमाङ्गुल्या धार्यो गन्धः स्वयं बुधैः ।। **गन्धादिदाने मुद्रा** - मध्यमानामिकाङ्गुष्टैरङ्गुल्यग्रेण पार्वति। दद्याच्च विमलं गन्धं मूलमन्त्रेण साधकः ।। अंगुष्ठतर्जनीभ्यां च पुष्पं देवे निवेदयेत् । मध्यमानामिकाभ्यां तु मध्यपर्वणि देशिकः।। अंगुष्ठाग्रेण देवेशि धृत्वा धूपं निवेदयेत् । उत्तोलनं त्रिधा कृत्वा गायत्र्या मूलयोगतः ।।

तत्त्वाख्यमुद्रया देवि नैवेद्यं विनिवेदयेत् । मूलेनाचमनं दद्यात्तांबूलं तत्वमुद्रया।। गन्धदाने फलम् - गन्धेन लभते कामं गन्धो धर्मप्रदः सदा। अर्थानां साधको गन्धो गन्धे मोक्षः प्रतिष्ठितः।। (भविष्येपि) चन्दनेन विलिप्यार्च्चामग्निष्टोमफलं लभेत्। विलिप्य कृष्णागुरुणा वाजपेयफलं लभेत्।। **ग्राह्याणि पुष्पाणि** (शारदातिलके) कमले करवीरे द्वे कुमुदे तुलसीद्वयम् । जातीद्वयं केतकी द्वे कह्लारं चम्पकोत्पले ।। कुन्दमन्दार पुन्नागपाटला नागचम्पकम् । आरग्वधं कर्णिकारं पारन्ती नवमालिका।। सौगन्धिकं सकोरण्टं पलाशाशोकमल्लिकाः। धत्तूरं सर्जकं बिल्वमर्जुनं मुनिपत्रकम् ।। अन्यानपि सुगन्धीनि पत्रपुष्पाणि देशिकैः। उपदिष्टानि पूजायामाददीत विचक्षणः। मलिनं भूमिसंस्पृष्टं कृमिकेशादिदूषितम् । अङ्गस्पृष्टं समाघ्रातं त्यजेत्पर्युषितं गुरुः।। (ग्रन्थान्तरे) पङ्कजं पञ्चरात्रं स्याद्दशरात्रं च बिल्वकम्। एकादशाहं तुलसी नैव पर्युषिता भवेत्।। जातीशमीकुशाः कुङ्कुः मल्लिका करवीरजम्। नागपुन्नागकाशोकरक्त नीलोत्पलानि च।। चम्पकं बकुलं चैव पद्माबिल्वं पवित्रकम् । एतानि सर्वदेवानां संग्राह्याणि समानि च।। पत्रं वा यदि वा पुष्पं फलं वापि तथैव च। केशवार्थे शिवार्थे वा यथोत्पन्नं तथार्पयेत् ।। मध्यमानामिकामध्ये पुष्पं संगृह्य पूजयेत्। अङ्गुष्ठतर्जनीभ्यां तु निर्माल्यमपनोदयेत।। बिल्वपत्रे विशेषः (पटले) त्रिजटापत्रकैकेन हेरम्बं हरिमर्चयेत्। कैवल्यं तस्य तेनेव शक्तिपूजा विशेषतः।। पत्रं वा यदि वा पुष्पं फलं नेष्टम धोमुखम् । यथोत्पन्नं तथा देयं

बिल्वपत्रमधोमुखम् ।। **देवभेदेन वर्ज्याक्षतानि** - नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणाधिपम् ।। न दूर्वया यजेद्देवीं बिल्वपत्रैर्न भास्करम् ।। उन्मत्तमर्कपुष्पं च विष्णोर्वर्ज्यं सदा बुधः। फलं च कृमिसंयुक्तं प्रयत्नात्तद्विवर्जयेत् ।।**मन्त्रमहोदधौ** अक्षतानर्कधत्तूरौ विष्णौ नैवार्पयेत्सुधीः। बन्धूकं केतकीं कुन्दं केशरं कुटजं जपाम् ।। शंकरे नार्पयेद्विद्वान्मालतीं यूथिकामपि । शक्तौ दूर्वार्कमन्दारान्मालूरं तगरं रवौ ।। विनायके तु तुलसीं नार्पयेज्जातुचिद्बुधः ।। **आह्निकतत्त्वे** वर्ज्यं पर्युषितं तोयंवर्ज्यं पर्य्युषितं दलम्। न वर्ज्यं जाह्नवीतोयं न वर्ज्यं तुलसीदलम् ।। शिवे विवर्जयेत्कुन्दमुन्मत्तं च हरौ तथा। देवी नामर्कमन्दारौ सूर्यस्य तगरं तथा ।। **लघुहारीतः** स्नानं कृत्वा च ये केचित्पुष्पं गृह्णन्ति वै द्विजाः। देवतास्तन्न गृह्णन्ति भस्मीभवति काष्ठवत् इति। एतत्तु द्वितीयस्नानाभिप्रायकमिति रत्नाकरः ।। तथा च **मत्स्यसूक्तेपि** स्नात्वा मध्याह्नसमये न च्छिन्द्यात्कुसुमं नरः। तत्पुष्पस्यार्चने देवि रौरव परिपच्यते ।। **धूपविचारः** (विष्णुधर्मेत्तरे) धूपदः सर्वमाप्नोति दीपदः सर्व मश्नुते ।। **धूपद्रव्याणि** (शारदातिलके) अगरू शीरगुग्गुलुशर्क रामधुचन्दनैः ।। धूपयेदाज्यसम्मिश्रै र्नीचै र्देवस्य देशिकः ।। (ग्रन्थान्तरे) अगुरु तगरु कुष्ठं शैलजं शर्करा स्यादुभयघन पुरस्ताच्चनन्दनैलाश्च साक्षात् । त्ववचनैरवरमुशीरं मांसिकर्पूरतालीसदलजलकचोरं जाति युग् धूपराजः ।। **तन्त्रसारे** गुग्गुलुः सरलं दारु पत्रं मलयसंभवम्। ह्रीबेरमगुरुं कुष्ठ गुडं सर्जरसं घनम् ।। हरीतकीं नखीं लाक्षां जटामांसी

च शैलजम्। षोडशाङ्गं विदुर्धूपं दैवे पित्र्ये च कर्मणि।। (अन्यच्च) चन्दनोभयकुष्ठं च नखसर्जः कचोरकः। एतद्गुड समानेन धूपं भवति चोत्तमम् ।। शर्करा नखगन्धं च जटामांसीलघुः समम्। क्षौद्रेण सह संमिश्रं धूपं भवति चोत्तमम् ।। **दशाङ्ग धूपो मदनरत्ने** षड्भागकुष्ठं द्विगुणो गुडश्च लाक्षात्रयं पञ्च नखस्य भागाः। हरीतकीसर्जरसं समांशं भागैकमेकं त्रिलवं शिलाजम्। घनस्य चत्वारि पुरस्य चैको धूपो दशाङ्गः कथितो मुनीन्द्रैः।। **वामनपुराणे** रुहिकाख्यं कणं दारुसिह्लकं सागुरुं सितम् । शङ्खं जातीफलं श्रीशे धूपानि स्युः प्रियाणि वै।। **धूपनिवेदने अङ्गुलीविचारः** (तन्त्रसारे) मध्यमानामिकाङ्गुल्योमध्यपर्वणि देशिकः। अंगुष्ठाग्रेण देवेशि धृत्वा धूपं निवेदयेत्।। ततः समर्पयेद्धूपं घण्टावाद्यजयस्वनैः । न भूमौ वितरेद्धूपं नासने न घटे तथा। यथा तथाधारगतं कृत्वा तं विनिवेदयेत् ।। धूपादिस्थानं (यामले) निवेदयेत्पुरोभागे गन्धं पुष्पं च भूषणम् । दीपं दक्षिणतो दद्यात्पुरतो वा न वामतः ।। वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे । नैवेद्यं दक्षिणे भागे पुरतो वा न पृष्ठतः।। धूपदीपौ सुभोज्यं च देवताग्रे निवेदयेत्।। दीपविचारः (शारदातिलके) वर्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा। आरोप्य दर्शयेद्दीपानुच्चैः सौरभशालिनः।। **कलिकापुराणे** न मिश्रीकृत्य दद्यात्तु दीपं स्नेहे घृतादिकम् ।। घृतेन दीपकं नित्यं तिलतैलेन वा पुनः ।। ज्वालयेन्मुनिशार्दूल सन्निधौ जगदीशितुः । कार्पासवर्तिका ग्राह्या न दीर्घा न च सूक्ष्मिका।। (आह्निकतत्वे) सर्वं सहा वसुमती सहते न त्विदं द्वयम्।

अकार्य्यपादघातं च दीपतापं तथैव च ।। **कालिकापुराणे** सुवृत्तवार्तिसस्नेहपात्रेऽभग्ने सुदर्शने। मृन्मये वृक्षकोटौ तु दीपं दद्यात्प्रयत्नतः ।। तैजसं दारवं लौहमार्तिक्यं नारिकेलजम् । तृणध्वजोद्भवं चापि दीपपात्रं प्रशस्यते।। नैव निर्वापयेद्दीपं देवार्थ मुपकल्पितम् । दीपहता भवेदन्धः काणो निर्वापको भवेत्।। **वाराहपुराणे** दीपं स्पृष्ट्वा तु यो देवि मम कार्याणि कारयेत् । तस्यापराधाद्वै भूमे पापं प्राप्नोति मानवः ।। (यामले) दीपं घृतयुतं दक्षेत्तैलयुक्तं च वामतः।। दक्षिणे च सितां वर्तिं वामतो रक्तवर्तिकाम्।। **दीपमहिमा** - पुरश्चरणकृत्ये च दीपं श्रृण्विह भैरव। दीपेन लोकाञ्जयति दीपस्तेजोमयः स्मृतः ।। चतुर्वर्ग प्रदो दीपस्तस्माद्दीपैर्यजेच्छ्रि्ये।। **विष्णुधर्मोत्तरे** यावदक्षिनिमेषाणि दीपो देवालये ज्वलेत । तावद्वर्षसहस्राणि स्वर्गलोके महीयते।। **नैवेद्यविचाराः शारदातिलके** स्वादूपदंशं विमलं पायसं सहशर्करम्। कदलीफलसंयुक्तं साज्यं मन्त्री निवे दयेत्।। तत्र तत्र जलं दद्यादुपचारान्तरान्तरम्।। नैवेद्यलक्षणम् - निवेदनीयं यद्द्रव्यं प्रशस्तं प्रयतं तथा।। तद्भक्ष्यार्हे पञ्चविधं नैवेद्यमिति कथ्यते।। भक्ष्यं भोज्य च लेह्यं च पेयं चूष्यं च पञ्चमम्।। सर्वत्र चैतन्नैवेद्यमाराध्यास्यै निवेदयेत् ।। पात्राणि -तैजसेषु च पात्रेषु सौवर्णे राजते तथा। ताम्रे वा प्रस्तरे वापि पद्मपत्रेथ वा पुनः।। यज्ञदारुमये वापि नैवेद्यं स्थापयेद्बुधः। सर्वाभावे च माहेये स्वहस्तघटिते यदि नैवेद्यकालः - अर्वाग्विसर्जनादद्रव्य नैवेद्यं सर्वमुच्यते। विसर्जिते जगन्नाथे निर्माल्यं भवति क्षणात्।। (नैवेद्यस्थापनक्रमो गौतमीये) नैवेद्यं दक्षिणे भागे पुरतो वा

न पृष्ठतः। दक्षिणं तु परित्यज्य वामे चैव नि धापयेत् ।। अभोज्यं तद्भवेदन्नं पानीयं च सुरोपमम्।। (आह्निकतत्वे) तृषार्ताः पशवो रुद्धाः कन्यका च रजस्वला। देवता च सनिर्माल्या हन्ति पुण्यं पुरा कृतम्।। (देवलः) चाण्डालेन शुना वापि दृष्टं हविरयाज्ञिकम् । विडालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत्।। (पद्मपुराणे) हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करम् । नैवेद्यं देवदेवाय यावकं पायसं तथा। नैवेद्यवस्त्वलाभे तु फलानि च निवेदयेत्। फलानामप्यलाभे तु तोयान्यपि निवेदयेत्।। नैवेद्य **भक्षणविचारः** । कालिकापुराणे। यो यद्देवार्चनरतः स तन्नैवेद्यभक्षकः। केवलं सौरशैवे तु वैष्णवो नैव भक्षयेत्।। समानं त्वन्यनैवेद्यं भक्षयेदन्यदैवतः।। शिवनैवेद्ये विशेषः (भविष्ये) शालग्रामोद्भवे लिंगे बाणलिङ्गे स्वयंभुवि। रसलिंगे तथार्षे च सुप्रसिद्धप्रतिष्ठिते।। हृदये चंद्रकान्ते च स्वर्णरौप्यादिनिर्मिते। चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षणम्।। लिङ्गे स्वयंभुवे बाणे रत्नजे रसनिर्मते । सिद्धप्रतिष्ठिते चैव न चण्डाधिकृतिर्भवेत्।। यत्र चण्डाधिकारोस्ति तद्भोक्तव्यं न मानवैः। चण्डाधिकारो नो यत्र भोक्तव्यं तत्र भक्तितः ।। (हेमाद्रौ परिशिष्टे) अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम् । शालग्रामशिलासंगात्सर्वं याति पवित्रताम्।। (पुरश्चरण चंद्रिकायाम्) सुषुम्नावर्त्मना पुष्पमाघ्रायोद्वासयेत्सुधीः। निर्माल्यं मस्तके धार्यं सर्वांगेष्वनुलेपनम् ।। नैवेद्यं चोपभुञ्जीत दत्त्वा तद्भक्तिशालिने।। इति।। भक्तिशालिने-विष्वक्सेनायेत्यर्थः। तथा च (गौतमीये) गणेशे वक्रतुण्डाय सूर्ये चंडांशवेर्पयेत्।

विष्णौ तु विष्वक्सेनाय शिवे चण्डेश्वराय च ।। शक्त्युच्छिष्टे शेसिकायै दद्यादर्चनसिद्धये। अन्यथा नैव सिद्धिः स्यादर्चको नरकं व्रजेत् ।। देवनिर्माल्यत्यागे दोषः (रुद्रयामले) निवेदितं च यद् द्रव्यं भोक्तव्यं तद्विधानतः। तन्न चेद्भुज्यते मोहाद्भोक्तु मायान्ति देवताः ।। ताम्बूलादिविचारः (नारदीयपुराणे) भोजनानन्तरं देयमद्भिः कर्पूरवासितैः। मह्यमाचमनं मध्ये पानीयं करमार्जनम् ।। फलं ताम्बूलसहितं दक्षिणां कनकान्विताम् । पुष्पाञ्जलिं ततः कुर्याद्भक्त्यादर्शं प्रदर्शयेत् ।। नीराजनं ततः कुर्यात्साष्टाङ्गं भक्तिपूर्वकम्।। नीराजनकरणप्रकारः (कालोत्तरतन्त्रे) पञ्चनीराजनं कुर्य्यात्प्रथमं दीपमालया। द्वितीयं सोदकाब्जेन तृतीयं धौतवाससा।। चूताश्वत्थादिपत्रैश्च चतुर्थं परिकीर्तितम्। पञ्चमं प्रणिपातेन साष्टाङ्गेन यथाविधि ।। **हरिभक्तिविलासे** आदौ चतुष्पादतले च विष्णोर्द्वौ नाभिदेशे मुखमण्डलैकम्। पञ्चमं प्रणिपातेन साष्टाङ्गेन यथाविधि ।। आदौ चतुष्पादतले च विष्णोर्द्वौं नाभिदेशी मुखमण्डलैकम्। सर्वेषु चाङ्गेष्वपि सप्तवारानारार्तिकं भक्तजनस्तु कुर्य्यात्।। साष्टाङ्गनमस्कारः - उरसा शिरसा द्रृष्ट्या मनसा वचसा तथा पद्भ्यां कराभ्यां जानुभ्यां प्रणामोष्टाङ्ग उच्यते ।। नवधा भक्तिः (भागवते) श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वंदनं दास्यं सख्य मात्मनिवेदनम्।। इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा । क्रियते भगवत्यद्धा सोपि याति परां गतिम् ।। निर्माल्यग्रहण विचारः (आह्निकतत्वे) पादोदकं च निर्माल्यं नैवेद्यं च विशेषतः। महाप्रसाद इत्युक्त्वा ग्राह्यं विष्णोः

प्रयत्नतः ।। (पद्मपुराणे) ये पिबन्ति नरा नित्यं शालग्राम शिलोदकम्। प्रक्षालयन्त्यंसदिग्धं ब्रह्महत्यादिपातकम् ।। (पुलस्त्यः) शालग्रामशिलावारि सोमपानं दिनेदिने। पात्रान्तरेण संग्राह्यं न करेण कदाचन ।। शिवलिङ्गे विशेषः (निर्णयसिन्धौ) स्नापयित्वा विधानेन यो लिङ्गस्नापनोदकम्। त्रिःपिबेत्त्रिविधं पापं तस्येहाशु विनश्यति।। लिङ्गस्नापनावार्भिर्यः कुर्यान्मूर्ध्न्यर्य भिषेचनम् । गङ्गास्नानफलं तस्य जायतेत्र विपाप्मनः ।। बाणलिङ्गानि राजेन्द्र रव्यातानि भुवनत्रये । न प्रतिष्ठा न संस्कारो न च निर्माल्यकल्पना ।। प्रदक्षिणाविचारः (लिङ्गार्चनचन्द्रिकायाम्) एकां चण्ड्यां रवौ सप्त तिस्रो द्द्याद्विनायके। चतस्रो विष्णवे दद्याच्छिवे तिस्रः प्रदक्षिणाः **शिवप्रदक्षिणायां विशेषः** (शिव रहस्ये) प्रदक्षिणात्रयं कुर्यात्तथा पञ्चदशाथवा। अष्टो द्वादश वा कार्य्या ह्यधिका वापि शक्ति नैकां प्रदक्षिणां कुर्य्यात्साम्बस्य परमात्मनः। एकां प्रदक्षिणां कृत्वा शम्भोः पुण्यात्प्रहीयते ।। प्रदक्षिणत्रयान्यूनं नैव कार्य्ये महेश्वरे । पूजां कृत्वा तु यः शम्भोर्न करोति प्रदक्षिणाम् ।। सा पूजा निष्फला तस्य पूजकः स च दाम्भिकः।। भक्त्या करोति यः सम्यक्केवलं तु प्रदक्षिणाम् । पूजा सर्वा कृता तेन स सम्यक् शिवपूजकः ।।

**चण्डसोमसूत्रादिसहितशिवपूजायां प्रदक्षिणाविचारः-** एका चण्ड्या रवेः सप्त तिस्रः कार्य्या विनायके । हरेश्चतस्रः कर्तव्याः शिवस्यार्द्धा प्रदक्षिणा ।। वृषं चण्डं वृषं चैव सोमसूत्रं पुनर्वृषम् । चण्डं च सोमसूत्रं च पुनश्चण्डं पुनर्वृषं ।। ।। अपसव्यं यतीनां तु सव्यं तु ब्रह्मचारिणाम्। सव्यापसव्यं

गृहिणामेवं शम्भोः प्रदक्षिणा।। सव्यं व्रजेत्ततोसव्यं प्रनालं नैव लङ्घयेत्।। **आसनाद्युपचारफलम्** (शैवरत्नाकरे) आवाहनं तु यो दद्यात्स च क्रतुफलं लभेत् । आसनं रुचिरं दत्त्वा शतक्रतुत्व माप्नुयात्।। पाद्येन पातकं हन्यादर्घ्येणाप्नोत्यनर्घताम्। ततश्चाचमनं दत्त्वा सुचित्तः सुखितां व्रजेत्।। स्नानं व्याधिभयं हन्या द्वस्त्रेणायुष्यवर्द्धनम्। उपवीतं तु यो दद्याद्ब्रह्मवेत्तृत्वमेव च।। भूषणानिच यो दद्यादनापद्यमवाप्नुयात् । गन्धेन लभते काममक्षते रक्षतं भवेत्।। नानापुष्पप्रदानेन स्वर्गे राज्यमवाप्नुयात्।। धूपो दहति पापानि दीपो मृत्युविनाशनः।। सर्वमानस्तु नैवेद्यं दत्त्वा तृप्तिरतो भवेत्। मुखवासनदानेन कीर्तिमान्भवति ध्रुवम्।। नीराजनेन शुद्धात्मा दर्पणेन प्रकाशयेत् । फलदः पुत्रवान्मर्त्यस्ताम्बूलात्स्वर्गमाप्नुयात् ।। प्रदक्षिणां तु यः कुर्य्यात्पापं हन्ति पदेपदे। दण्डप्रणामं यः कुर्याद्देवमुद्दिश्य सन्निधौ।। वर्षाणि वसते स्वर्गे देहान्ते रेणुसंख्यया।। स्तोत्रेण दिव्यदेहोपि वाग्मी भवति तत्क्षणात्। पुराणपठनेनैव सर्वपापक्षयो भवेत् । **पञ्चामृतस्नानफलम्** (बृहन्नारदीये) पयःस्नानं प्रकुर्वन्ति ये नरा मम मूर्द्धनि । शताश्वमेधजं पुण्यं बिन्दुना बिन्दुना स्मृतम्।। क्षीरस्नानेन सौभाग्यं दध्ना मिष्टान्नभोजनं। धृतेन स्नापयेद्यो मां नरो मम पुरं व्रजेत्।। स्नानं शर्करया यस्तु कारयेद्वस्त्रपूतया। स राजा जायते लोके पुनः स्वर्गादिहच्युतः।। कारयेन्मधुना स्नानं भक्त्या वै मम मूर्द्धनि। गजाश्वरथसंकीर्णे सराज्यं लभते भुवि।। स्नपयेयुर्वेदमन्त्रैर्ये मां पञ्चामृतेन तु। न जातु जननीगर्भे प्रविशन्ति च ते नराः ।।

अर्घ्यं कृत्वातु शङ्खेन यः करोति प्रदक्षिणम्।। प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा इति। **महास्नाने पञ्चामृतप्रमाणम्** (हेमाद्रौ शिवधर्मे) स्नानं पलशतं ज्ञेयमभ्यङ्गं पञ्चविंशतिः। पलानां द्वे सहस्र तु महास्नानं प्रकीर्तितम्।। पञ्चविंशपलं लिङ्गे अभ्यङ्गे कारयेदथ। शिवस्य सर्पिषा स्नानं प्रोक्तं पलशतेन च।। तावता मधुना चैवदध्ना चैव ततः पुनः । तावतैव च क्षीरेण गव्येनैव भवेत्ततः।। भूयः सार्द्धसहस्रेण पलानामैक्षवेण च। रसेन कारयेत्स्नानं भक्त्या चोष्णाम्बुना ततः। पुनः शीताम्बुना दत्त्वा वस्त्रपूतेन मन्त्रवित् । स्नापयेद्भक्तितो भूयो गन्धपात्रस्थितेन तु।। विष्णवादौतु (स्कान्दे) क्षीराद्दशगुणं दध्ना घृतेनैव दशोत्तरम् । घृताद्दशगुणं श्रौद्रं क्षौद्राच्चैक्षवयं तथा।। पञ्चगव्यस्नानम् (कालिकापुराणे) कपिला पञ्चगव्येन कुशावारियुतेन च। स्नापयेन्मन्त्रपूतेन ब्राह्मं स्नानं तदुच्यते ।। एकाहमपि यो लिङ्गे ब्राह्मं स्नानं समाचरेत्। विधूय सर्वपापानि रुद्रलोके महीयते।। वस्त्राणि (जयसिंहकल्पद्रुमे) पीतकौशेयवसनं विष्णुप्रीत्यै प्रकीर्तितम्। रक्तं शक्त्य केविघ्नानां शिवस्य च सितं प्रियम् ।। मलहीनं तथाच्छिद्रं क्षौम कार्पासमेव वा।। **देवभेदेन निषिद्धवाद्यानि**-शिवागारे झल्लकं च सूर्यागारे तु शंखकम्। दुर्गागारे वंशवाद्यं मधुरीं च न वादयेत्।। (तत्रैव) वादित्राणामभावे तु पूजाकाले च सर्वदा। घंटाशब्दो नरैः कार्यः सर्ववाद्यमयी यतः।। स्नाने धूपे तथा दीपे नैवेद्ये भूषणे तथा। घण्टानादं प्रकुर्वीत तथा नीराजनेपि च।। इति पूजाविचारप्रकरणम् ।।

----000----

आचम्य प्राणानायम्य देशकालौ स्मृत्वा अमुककर्माङ्गतया पञ्चभूसंस्कारान् करिष्ये इति संकल्पं कुर्यात् । तथा च **कात्यायन** संकल्प एव मुख्यः स्थात्स्नानदानादिकर्मसु । कर्म संकल्परहितं तत्सर्वे निष्फलं भवेत् ।। इति । ततः शुद्धायां भूमौ चतुर्विं शत्यङ्गुलायतं स्थण्डिलं परिकल्पयेत् । तथा चोक्तम् स्यण्डिलं मृन्मयं कार्यं, चतुर्विंशाङ्गुलायतम् । द्विरङ्गुलं भवेत्कण्ठं व्यासस्य वचनं यथा ।। (कर्मप्रदीपे विशेषः) अष्टाङ्गुलसमुत्सेधं चतुर्विंशाङ्गुलायतम्। पन्नगास्तत्र सीदंति तदर्थे स्थण्डिलं भवेत्।। **अथ परिसमूहनादिविचारः**। परिसमुह्य इति सूत्रम्। त्रिभिर्दर्भैः पांसूनपसार्य इति हरिहरभाष्यम्। (बादरायणोऽपि) कृमिकीटपतङ्गश्च कुशत्रयम्। तदग्रैस्तस्य रजसां पूर्वस्यामपसर्पणम्।। उपलिप्य इति सूत्रम्। गोमयोदकेन इति हरिहरः। (कारिकायाम्) पुरा इन्द्रेण वज्रेण हतो वृत्रो महासुरः। व्यापिता मेदसा पृथ्वी तदर्थमुपलेपनम् ।। गोमये वसते लक्ष्मीः पवित्रा सर्वमङ्गला। यज्ञार्थे सेस्कृता भूमिस्तदर्थमुपलेपम्।। गोमयक्षणम् (कल्पवल्ल्याम्) रुग्णा वृद्धा प्रसूता च वन्ध्या संधिन्यमेध्यभुक्। मृतवत्सा च नैतासां ग्राह्यं मूत्रं शकृत्पयः।। स्वच्छं तु गोमयं ग्राह्यं स्थाने च पतिते शुचौ। उपर्य्यधः परित्यज्य आर्द्रं जन्तु विवर्जितम्।। त्रिरुल्लिख्य इति सूत्रम्। त्रिः खादिरेण हस्तमात्रेण खड्गाकृतिनास्फ्येन उल्लिख्य प्रागग्रा उदक्संस्थाः स्थण्डिल परिमाणास्तिस्रो रेखाः कृत्वा इति हरिहरः। (कल्पवल्यामपि) उल्लेखनं ततः कुर्यादस्थि कण्टकमेव च। तेषामुध्दरणार्थाय

उल्लेखः कथितो बुधैः ।। (कुशकण्डिकाभाष्येपि) रेखात्रयमुदक्संस्थं प्रागग्रं स्थण्डिलावधि। अथवा तत्र कुर्वीत द्वादशाङ्गुलमानतः ।। (संग्रहेऽपि) फलेन फलमाप्नोति पुष्पेण श्रियमृच्छति। पत्रेण धनलाभं च दीर्घमायुः कुशेन तु ।। भवेन्नखेन कुनखी कीलेन सिद्धिः कर्मसु सर्वदा ।। इति (प्रयोगचिन्तामणौ) प्रथमा सात्त्विकी ज्ञेया द्वितीया राजसी मता । तृतीया तामसी तासां देवा ब्रह्माच्युतेश्वराः ।। उद्धृत्य इति सूत्रम्। अनामिकाङ्गुष्ठाभ्यां यथोल्लिखिताभ्यो लेखभ्यः पांसूनुद्धृत्य इति हरिहरः। (कर्म प्रदीपेऽपि) अङ्गुष्ठोपकनिष्ठाभ्यामग्निकार्ये तथोत्करम्। रेखाभ्यः समुपादायारत्निमात्रे निधापयेत्।। (कारिकायाम्) ये भ्रमन्ति पिशाचाद्या आकाशपयगामिनः। तेषां संरक्षणार्थाय उद्धृत्य कथितं बुधैः।। अभ्युक्षय इति सूत्रम्। मणिकाद्भिरभ्युक्षयाभिषिच्य इति हरिहरः (कारिकायामपि) आपो देवगणाः सर्वे आपः पितृगणाः स्मृताः। तेनैवाभ्युक्षणं प्रोक्तमृषि भिर्वेदावादिभिः ।। (संग्रहे विशेषः) उत्तानेन तु हस्तेन कर्तव्यं प्रोक्षणं बुधैः। अवाचीनेन हस्तेन कर्तव्यं तदबेक्षणम्। मुष्टीकृतेन हस्तेन चाभ्यु क्षणमुदाहृतम्।। एते पञ्च भूसंस्काराः। **अनन्तरं कुशकण्डिकाविचारः क्रियते।** अग्निमुपसमाधाय इति सूत्रम् । कर्मसाधनभूतं लौकिकं स्मार्ते क्षौतं वाग्निम् आत्माभिमुखं स्थापयित्वा इति हरिहरः। तथा च (प्रयोगरत्ने अत्रिः) पात्रान्तरेणापिहितं ताम्रपात्रादिके शुभे। अग्निप्रणयनं कुर्याच्छरावे तादृशेपि वा ।। (प्रयोगपारिजाते) शुभं पात्रं तु कांस्यं स्यात्तेनाग्निं प्रणयेद्बु धः। तस्याभावे शरावेण

नवेनापि दृढेन च।। (संस्कारभास्करे) शरावे भिन्नपात्रे वा कपाले चोल्मुकेऽपि वा। नाग्निप्रणयनं कुर्यात् व्याधि हानिभयावहम्।। इत्यत्र शरावनिषेधकं वचनं मुख्यपात्रासंभवे वेदितव्यम् । कपालं खर्परम् । उल्मुकं ज्वलदग्नेरेकदेशमि त्यर्थः। (कल्पवल्याम्) संपुटेनाग्निमानीय स्थाप्याग्नेरिर्दिशि कुण्डतः। आमकव्यभुजौ तस्मात्यक्त्वा कुण्डे विनिक्षिपेत्।। (कुश कण्डिकाभाष्ये) अग्निमानीय पात्रे तु प्रक्षिपेदक्षतोदकम्। यद्येवं नैव कुर्वीत यजमानभयावहम्।। (कल्पवल्यामपि) आनी तपात्रयोरेव प्लावनं तत्क्षणे भवेत् । नो चेत्कर्तुर्मनस्तापः स्यात्संतापस्तयोरपि।। अग्निनियमः (प्रयोगरत्ने संग्रहे च) उत्तमोरणिजन्योग्निर्मध्यमः सूर्यकान्तजः। उत्तमः श्रोत्रियागारान्मध्यमः स्वगृहादिजः।। (शारदातिलकेऽपि) सूर्यकान्तादिसंभूतंवाश्रोत्रियगेहजम् । आनीय चाग्निं पात्रेण क्रव्यादंशं परित्यजेत्।। (मन्त्रमहोदधौ) सूर्यकान्तादरणितः श्रोत्रियागारतोपि वा। पात्रेण पिहिते पात्रे वह्निमेवानयेत्ततः।। अस्त्रेणादाय तत्पात्रं वर्मणोद्धाटयेत्तु तम् । अस्रमन्त्रेण नैर्ऋत्ये क्रव्यादांशं ततस्त्त्य जेत्। मूलेन पुरतो धृत्वासंस्कारंश्च ततश्चरेत्।। त्याज्याग्निमाह (देवलः) चाण्डालाग्निरमेध्याग्निः सूतकाग्निश्च कर्हिचित्। पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचितः।। ग्रहहोमे विशेषः (स्कान्दे) आदित्ये कपिलो नाम पिङ्गलःसोम उच्यते । धूमकेतुस्तथा भौमे जाठरोग्निर्बुधे स्मृतः।। गुरौ चैव शिखी नाम शुक्रे भवति हाटकः। शनैश्चरे महातेजा राहुकेत्वोर्हुताशनः।। अथाग्निजिह्वानामानि - याभिर्हव्यं

समश्नाति हुतं सम्यग् द्विजोत्तमैः ।। काली कराली च मनोजवा च सुलोहिता चैव सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरुचिस्तथा च चलायमाना इति सप्त जिह्वाः ।। एताश्चोक्ता विशेषेण ज्ञातव्या ब्राह्मणेन तु। आहूय चैव होतव्यो यो यत्र विहितो विधिः ।। अविदित्वा तु यो ह्यग्निं होमयेदविचक्षणः । न हुतं न च संस्कारो न तु यज्ञफलं भवेत् इति ।। अन्यत्र जिह्वैककरणमुक्तम्। जिह्वैककरणं प्रोक्तं सप्तानामेकया ऋचा। समुद्रादूर्मिरनया होतव्यं कर्मसिद्धये ।।

## ।। अथ कुमारी पूजा ।।

यजमानः पूजयेच्च कन्यानां नवकं शुभं ।।

द्विवर्षाद्या दशाब्दांताः कुमारीः परिपूजयेत् ।। अर्थात् एक हायनाल्पवयस्का वर्ज्याः

ताः आसनेषुपवेश्यावाहयेन्मंत्रेण ।। मंत्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीं। नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहं ।। अनेनैव मंत्रेण नवापि आवाहयेत् ।। अशक्तौ यथा शक्ति एकामपि ।। अथ नवानां पूजा मंत्राः ।। **द्विहायना कुमारी** संज्ञका तन्मन्त्रः ।।

सर्वस्वरूपे सर्वेशे सर्वशक्ति स्वरूपिणी ।। पूजांगृहाण कौमारि जगन्मातः नमोस्तुते ।। **त्रिहायना त्रिमूर्तिमन्त्रः** ।।

त्रिपुरां त्रिपुराधारां त्रिवर्षां ज्ञानरूपिणीं। त्रैलोक्य वंदितां देवीं त्रिमूर्ति पूजयाम्यहं ।। **चतुर्वर्षा कल्याणीमन्त्रः** ।। कलात्मिकां कलातीतां कारुण्यहृदयांशिवां ।। कल्याण जननीं देवीं कल्याणीं पूजयाम्यहं ।। **पंचवर्षा रोहिणी** तत्पूजामंत्रः ।। अणिमादि गुणाधारा मकाराद्य क्षरात्मिकां ।। अनंतशक्तिकां

लक्ष्मीं रोहिणीं पूजयाम्यहं।। **षड्वर्षा कालिका**तत्पूजामंत्रः।। कामचारां शुभां कांतां काल चक्रस्वरूपिणीं।। कामदां करुणोदारां कालिकां पूजयाम्यहं।। **सप्तवर्षा चंडिका तत्पूजामंत्रः**।। चंडवीरां चंडमायां चंडमुडप्रभंजनीं।। पूजयामि सदा देवीं चंडिकां चंडविक्रमां।। **अष्टवर्षा शांभवी** तत्पूजामंत्रः।। सदानंदकरीं शांतां सर्वदेव नमस्कृतां।। सर्वभूतात्मिकां लक्ष्मीं शांभवीं पूजयाम्यहं।। **नवहायना दुर्गामंत्रः**।। दुर्गमे दुःस्तरे कार्ये भवदुःखार्ति नाशिनीं। पूजयामि सदाभक्त्या दुर्गां दुर्गतिनाशिनीं।। **दशवर्षा सुभद्रा** तत्पूजामंत्रः।। सुंदरीं स्वर्णवर्णाभां सुख सौभाग्य दायिनीं। सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहं।। इति प्रत्येकं नाममंत्रै पूजयेत्।। पाद्यं ।। आसन।। अर्घ्य गंध पुष्पं वस्त्रादिउपचारैः संपूज्य।। नैवेद्यकाले क्षीरं फलं च दत्वा।। नीराजनं कृत्वा।। अनेन चण्डिका प्रीतये कुमारी पूजनेन भगवान् ।।

----000----

।।अथ कामना परत्वेन कलशमध्ये निक्षेपपदार्थाः ।। संशोध्य भूमिं संस्थाप्य कलशं तीर्थवारिणा।। पूरयित्वा वाजिगज शालादिभ्यो मृदस्तथा।। धनकामो न्यसेत्स्वर्ण धान्यकामस्तु मौक्तिकम् ।। श्रीकामः कमलं न्यस्य कामार्थी दमनं न्यसेत् ।।मोक्षकामो न्यसेद्रत्नं जयकामोपराजिताम्।। उच्चाटनार्थं हिङ्गुलं वश्यार्थं शिखिमूलिकाम्।। मारणाय मरीचं तु केतकीं मोहनाय च।। आकर्षणार्थं धत्तूरं प्रक्षिपेत्कलशोपरि।। जपेन्मन्त्रं महेशानि श्रृणुष्व गदतो मम।। क्षिप्तं यत्कलशे हस्ते तदेमं प्रजपेन्मनुम्।। नकुलीशं वामकर्णयुतमर्धेन्दुमस्तकम्।। द्विर्वाग्भवं समुच्चार्य

मायाबीजमथोच्चरेत्।। चामुण्डायै समुच्चार्य द्विठान्तोय मुदीरितः।। जपेद्द्वादशलक्षं तु स्नानं तेनैव वारिणा।। एवं शतावृत्तिफलं मयोक्तं ते विधिप्रिये।। आधारे स्थापयित्वा तु पुस्तकं वाचयेत्ततः।।हस्ते संस्थापनाद्देवी ह्नन्त्यै हि फलं यतः।। होमे प्रदीपिते वह्नौ मोक्षार्थी पायसं हुनेत्।। मारणे मोहने चैव तथैवोच्चाटकर्मणि हुनेन्मांसं त्रिमध्वक्तं मोहने मधुपायसम्।। स्तम्भने मातुलफलं वश्ये तु सितसर्षपाः।। धर्मार्थकाममोक्षार्थे पूर्वाशाभिमुखो यजेत्।। मोहने मारणे चेव हुनेद्वै दक्षिणामुखः।। उच्चाटने उत्तरास्यः पूर्वोक्तमनुना हुनेत्।। एवं शतावृत्तिफलं मयोक्तं ते विधिप्रिये।। एकावृत्तयादयः पाठाः सर्वेषां सर्वकामदाः।। भुक्तिमुक्तिप्रदाः पुण्याः पातकानां च पावनाः।। हरगौरीतन्त्रे।। श्रीकामः पुत्रकामो वा सृष्टिमार्गक्रमेण तु।। सावर्णिः सूर्यतनयः सावर्णिर्भविता मनुः।। जपेच्छक्रादिमारभ्य शुम्भदैत्यवधावधि।। आद्यमारभ्य प्रजपेत्पश्चाच्छेषं समापयेत् ।। शान्त्यादिकामः सर्वत्र स्थितिमार्गक्रमेण तु।। स्थितिपाठः सर्वकामे मुक्ति कामे च संह्नतिः।। संहारे चान्त्यमारभ्य पश्चादादि समापयेत् ।। पञ्च स्वर्णाः शतावृत्तौ पक्षावृत्तौ तु तत्त्रयम् ।। पञ्चावृतौ स्वर्णमेकं **त्रिरावृत्तौ तदर्धकम् ।।**

## १. शैल पुत्री

वन्दे वांछित लाभाय चन्द्रार्धकृत शेखराम् ।
वृषारूढां शूलधरां शैलपुत्रीं यशस्विनीम् ।।

## २. ब्रह्म चारिणी

दधान करपद्माभ्यामक्षमाला कमण्डलू।
देवी प्रसीदतु मयि ब्रह्मचारिण्यनुत्तमा।।

## ३. चन्द्रघण्टा

पिण्डज प्रवरारूढा चण्डकोपास्त्रकैर्युता।
प्रसादं तनुते कह्यं चन्द्रधण्टेति विश्रुता॥

## ४. कूष्माण्डा

सुरा सम्पूर्ण कलशं रुधिराप्लुत मेव च।
दधाना हस्त पद्माभ्यां कूष्माण्डा शुभदास्तु मे॥

## ५. स्कन्दमाता

सिंहासनगता नित्यं पद्माश्रित कर द्वया।
शुभ दास्तु सदा देवी स्कन्दमाता यशस्विनी॥

## ६. कात्यायनी

चन्द्र हासोज्वलकरा शार्दूलवर वाहना।
कात्यायनी शुभं दद्याद्देवी दानव घातिनी॥

## ७. कालरात्रि

एकवेणी जपाकर्णपूरा नग्ना खरास्थिता।
लम्बोष्ठी कर्णिका कर्णी तैलाभ्यक्त शरीरिणी॥
वाम पादोल्लसल्लोहलता कण्टक भूषणा।
वर्धनमूर्धध्वजा कृष्णा काल रात्रिर्भयंकरी॥

## ८. महागौरी

श्वेते वृषे समारूढा श्वेताम्बर धरा शुचिः
महागौरीशुभं दद्यान्महा देव प्रमोददा॥

## ९. सिध्दिदात्री

सिध्दगन्धर्व यक्षाद्यैरसुरैरमरैरपि ।
सेव्यमानासदा भूयात् सिध्दिदा सिध्दि दायिनी।

----000----

## उपचार विशेषश्लोकाः

१. ॐ आगत्य हृत्कमलतो मम देविदुर्गे पूजां
गृहीतुमखिलां इहसन्निधेहि।
यावद्विसर्जनमहंकर्वाणितावदत्र
स्थिराभवमहेशविलासिनित्वं॥ ॐ सहस्रशीर्षा०।
ॐहिरण्यवर्णां०। श्री० आवाहनं०॥

२. ॐ कनकमयवितर्दिस्थापितेतूलिका े।
विविधकुसुमकीर्णेकोटिबलार्कवर्णे॥
भगवतिरमणीयेरत्नसिंहासनेऽस्मिन्। उपविशपदयुग्मं
हेमपीठेनिधाय॥ ॐ पुरुषएवेदं०।

३. ॐ दूर्वयासरसिजान्वित विष्णुक्रान्त्याच
सहितंकुसुमोपम।
पमयुग्मसदृशे पादयुग्मे पाद्यदुररिकुरुमातः॥

४. ॐ गंधपुष्पयवसर्षपदूर्वा संयुतंतिलकुशाक्षतमिश्रम्
। हेमपात्रनिहितंसहरत्नै अर्घ्यमेतदुररीकुरुमातः ॥

५. ॐ जलजद्युतिनाकरेण
जातीफलकंकोललवंगगंधयुक्तैः । अमृतैरमृतैः
इवातिशीतैः भगवत्याचमनंविधीयताम् ॥

६. ॐ निहितंकनकस्यसंपुटेपिहितंरत्नापिधानकेनच ।
तदिदंजगदंबतेर्पितमधुपर्कंगिरिजेप्रग्रह्यताम् ॥
देवतांस्नानमण्टपं प्रवेश्य। श्री० स्नामण्टपप्रवेशनं
कल्पयामि॥ तत्र पीठे उपवेश्य श्री० पीठोपवेशनं

कल्पयामि॥ भुषणान्यवरोप्य श्री० भुषणावरोपं कल्पयामि ॥ चूडांविस्रस्य श्री० चूडाविस्रसनं कल्पयामि ॥ ॐ कनिक्रदज्जनुशंबब्रुवाण इयर्तिवाचं.....सुविराः॥ इत्यनेन श्री० सुगन्धितैलाभ्यंगं कल्पयामि॥ श्री० स्नानपीठोपविश्यनं कल्पयामि॥ श्री० उद्वर्तनं कल्पयामि॥ श्री० उष्णोदकस्नानं कल्पयामि॥ पयः स्नानं०। शुद्धोदक स्नानं०। दधि स्नानं०। शुद्धोदक स्नानं०। घृत स्नानं०। शुद्धोदक स्नानं०। मधु स्नानं०। शुधोदक स्नानं०। शर्करा स्नानं०। शुद्धोदक स्नानं०। स्वादूदक स्नानं०। शुद्धोदकस्नानं०।

७. ॐ स्नानंपंचामृतैर्देवि भद्रकालिनमोस्तुते ।
भक्त्यानिवेदितंतुभ्यंविश्वेश्वरिनमोऽस्तुते॥
ॐ गन्धद्वारां०००० इति श्री० सुगन्धध्युदक स्नानं कल्पयामि ॥ ॐ आपोहिष्टा०० श्री० शुद्धोदकस्नानं समर्पयामि ॥

८. ॐ
स्नानेऽन्नचंअनमुमेऽअक्षतचंचयंचसौभाग्यवस्तुकुसुमागरुधूपदीपौ।
भक्ष्यम्पयोदधिघृताद्यथदक्षिणादिपुष्पांजलिंनतिमुरीकुरु पंकजाक्षि ॥ श्री० स्नामाध्याराधनकल्पयामि॥

९. ॐ कर्पुरागुरुकुंकुमैर्मृगमदाद्यैःसर्वदासंस्कृतैः।
ऐलोशीरसुवासितैः सुकुसुमैः गंगादितीर्थोदकैः॥

मन्त्रान् वैदिकतांत्रिकान् परिपठन्
वाद्यैःसमंतेर्महास्नानंसंपरिकल्पयामि गिरिजे
प्रीत्यात्वमंगीकुरु॥

१०. ॐ बालार्कद्युतिदाडिमीयकुसुमप्रस्पर्धिसरोत्तमं।
मातस्त्वंपरिधेहि दिव्यवचनं भक्त्यामयातेऽर्पितं॥
मुक्ताभिर्गृथितं च कुंचकमिदंस्वीकृत्य पीतप्रभं।
तप्तस्वर्ण समानवर्णममलं प्रावारमंगीकुरु॥ श्री०
वस्त्राणि० आचमनीयं श्री० पादुके० श्री०
यागमण्टप प्रवेशनं० श्री० यागपीठोपवेशनं०॥

११. ॐ ससुरासुरकिन्नरार्चिते चतुरे कुंकुमपंकचर्चिते।
उपवीतमिदं प्रगृह्यतां कनकाद्युत्तमतंतुनिर्मितं॥ श्री०
यज्ञोपवीतं० श्री० यज्ञोपवीतांगाआचमनीयं०॥

१२. ॐ हंसैरप्यतिशोभनीयगमने हारावलीमुज्वलां ।
हिंदोलद्युतिहीरपूरिततरेहेमांगदेकंकणे ॥
भंजीरौ मणिकुंडलमुकुटमप्यर्धेन्दुचुडामणिं
नासामौक्तिकमंगुलीयकटकौ कांचीमपिस्वींकुरु॥
श्री०भुषणानि०

१३. मातः फालतले तवातिविमले काश्मीरकस्तूरिका
लेपंचागरु चन्द्रमोमलयजैः कुर्वेगरागंततः
वक्षोजादिषु यक्षकर्दमरसंसित्तवासपुष्पद्रवं॥
पादौ यावकलेपनादिभिरलंकुर्वेतवाहं क्रमात्॥ श्री०
चन्दनानुलेपनं०

१४. कंचूकींसूचिकावेधरहितां विश्वकर्मणा।
निर्मितां विलसन्मुक्ता गुच्छांस्वीकुरुमंगले॥ श्री०
कंचुकीं समर्पयामि ॥

१५. हरिद्रामंगलेकांर्यगृहीतां मुनिदेवतैः ।
मातर्गृहाणसुस्निग्धां मुखचन्द्रानुरंजनीं ॥ श्री०
हरिद्रा०

१६. ॐ सिंधूरं सर्वसौभाग्यसूचकंभालभूषणं।
स्वीकुरुष्वजगन्मातः जपाकुसुमभास्वरं॥ श्री०
कुंकुमं०

१७. कज्जलं नवनीता ं शुद्धकर्पूरमिश्रितं।
गृहाणंनेत्रभूषार्थंदत्तंस्वर्णशलाकया॥ श्री०कज्जलं०

१८. ॐ कंठसूत्रंकंकणानिताटंकेमौक्तिकंतथा।
मंजीरपदकादीनि स्वीकुरुत्वं जगन्मये॥ श्री० कण्ठसूत्रं०

१९. नासिकाभरणं दिव्यं कांचनेनसमन्वितं।
नासायुक्तं मयादत्तं गृहाणत्वं सुशोभने ॥ श्री०
नासिकाभरणं०

२०. ताडपत्रं मयादेवि हेमनिर्मितमुत्तमं।
कर्णयोर्भूषणंदत्तं गृहाणजगदंबिके॥ श्री० ताडपत्रं०

२१. काचनेननिर्मितं दिव्यंकंकणं च सुरेश्वरी।
हस्तालंकरणार्थाय गृगाणजगदंबिके॥श्री० कंकणं०

२२. ॐ सिंधूरनागसंभूतं स्त्रीणांसीमन्त भूषणं।
मातर्ददामि तेप्रीत्ये गृहाणजगदंबिके॥श्री० सिन्दूरं०

२३. ॐ अलंकारान् कंठकर्णशिरोहस्तनिवेशितान्।
गृहाणस्वर्णरत्ना न् बहुकौशल्यनिर्मितान् ॥ श्री०
आभरणानि०॥ श्री माहेश्वर्यै नमः कण्ठनासिकाभरणानि०
॥ॐ सितांभोजायै नमः हस्तपादाभरणानि०

२४. ॐ चंदनंमलयोद्भूतं, कुंकुमागरु मिश्रितं।
अष्ठगंधसमायुक्तं अंगभालेविलेपय॥ श्री०चन्दनं०

२५. ॐ अक्षतान् हीरकनिभान् रक्तान् पीतान् यथारुचि।
शोभार्थं संप्रदास्यामि गृहाणसुमनोहरं॥ श्री० अक्षतान्०

२६. ॐ सुगंधचूर्णं काश्मीर कस्तूरिचंद्रगंधितं।
पटवासाभिधमुस्तासंभूतमुररीकुरु॥श्री० सुगन्धद्रव्यं०

२७. ॐ बिल्ववृक्षकृतावासे बिल्ववृक्षप्रियेशुभे।
बिल्ववृक्षसमुद्भुतं गंधंचप्रतिगृह्यतां॥ श्री० बिल्वगन्धं०

२८. ॐ मालतीचंपकजपाबकुलाशोकदाडिमीः।
यथाप्रीतिसिताः प्रीताः पुष्पजातीगृहाणभोः॥
श्री०नानाविध पुष्पाणि०

२९. ॐ शिवपत्नीशिवेदेवी सर्वभक्तभयापहे।
द्रोणपुष्पंमयादत्तंनारायणी नमोस्तुते॥ श्री०द्रोणपुष्पं०

३०. ॐ बिल्वकै करवीरैश्च चंपकैः शतपुष्पकैः।
पुन्नागैर्बकुलैश्चैवपूजयामिसदाशिवे॥ श्री० सर्वपुष्पाणि०

३१. ॐ तुलसीबिल्वदूर्वाम्र शमीबकुलपल्लवान्।
मयादत्तान् गृहाणेमान् सहस्रपरिसंमितान्॥ श्री०
पत्राणि०

३२. ॐ गंधैरमंदैरुपसंभृतानि वर्णैर्मनोज्ञैसुपरिकृतानि।
नवानिसत्केसर शोभितानि पुष्पाणितुभ्यं गिरिजेऽर्पयामि॥
श्री० पुष्पाणि०अंगपूजादिकं कृत्वा॥

३३. ॐ सगुग्गुल्वगरुशीर गन्धादिसुमनोहरं ।
धुपं गृहाणदेवेशि दुर्गेदेविनमोस्तुते ॥ श्री० धूपं०

३४. ॐ प सुत्रोल्लसद्वर्ति गोघृतेनसमन्वितं ।
दीपंज्ञानप्रदंदेवी गृहाणप्रियतेऽर्पितं॥ श्री०दीपं०

३५. ॐ मातरत्वांदधिदुग्धपायसमहा शाल्यन्नसंतानिकां।
सूपापूपासिताघृतैः सुवटकैः सक्षौद्ररं भाफलैः ॥
एलाजीरकहिंगुनागरनिशा कुस्तुम्बरीसंस्कृतैःशाकैः
साकमहं सुधादिकरसैः संतर्पयाम्यर्चयन्॥
श्री० नैवेद्यं०

३६. ॐ कर्पूरादियुतैः लवंगसहितैः कंकोल चूर्णान्वितैः।
सुस्वादु क्रमुखैः सगौरखदिरैः सुस्निग्धजातीफलैः॥
मातः केतकपत्रपाण्डुरुचिभिस्तांबूलवल्लीदलैः ।
संक्लृप्तंमुखमडनार्थमतुलंतांबूलंअंगीकुरु ॥
श्री०ताम्बूलं०। हिरण्यगर्भगर्भस्त०० श्री० हिरण्य पुष्प
दक्षिणां०

३७. ॐनारिंग रंभाफलनारिकेल द्राक्षाम्रजंबू फलदाडिमानि।
सद्बीजपूरांमलकादिकानिफलानिते देविसमर्पयामि॥
श्री० फलानि०

३८. ॐ महतिकनकपात्रेरंगवल्यादि चित्रे डमरु सदृशरूपा
बद्धगोधूपपिष्टान् ।
घृतयुतबहुवर्तीन् ज्यस्यदीपान् विशालान् ।
भुवनजननिकुर्वे शुद्धमारार्तिकंते ॥ श्री० मंगलार्तिक्यं०

३९. ॐ चरणनलिनयुग्मंपंकजैरर्चयित्वा
कनककमलमालांकण्ठदेशेऽर्पयित्वा ।
शिरसिविनिदधेऽमुम् रत्नपुष्पांजलिंते
हृदयकमलमध्येदेविहर्षंतनोतु ॥ श्री० मन्त्रपुष्पांजलिं०

४०. ॐ विश्वेश्वरित्वंपरिपासिविश्वं
विश्वात्मिकाधारयसीतिविश्वं ।
विश्वेशवंद्याभवतीभवंति विश्वाश्रयायेत्वयिभ्क्तिनम्राः॥
श्री०प्रदक्षिणा नमस्कारान्०
अथ प्रार्थना॥

नमोदेव्यै महादेव्यै००० सर्वापदोभक्तिविनम्रमूर्तिभिः॥
इत्यन्तं प्रार्थयित्वा कृष्णार्पणं०॥
भारतीरमण मुख्यप्राणान्तर्गत
श्री रामकृष्णव्यासहयग्रीवात्मकदुर्गान्तर्यामि
श्री लक्ष्मीनरसिंहमूर्ति प्रीयतां०

----000----

## दुर्गास्तवः

सन्नद्धसिंहस्कन्धस्थां स्वर्णवर्णां मनोरमाम् ।
पूर्णेन्दुवदनां दुर्गां वर्णयामि गुणार्णवाम् ॥१॥

किरीटहारग्रैवेयनूपुराङ्गदकङ्कणैः ।
रत्नकांच्या रत्नचित्रकुचकंचुकतेजसा ॥२॥

विराजमाना रुचिराम्बरा किङ्किणिमण्डिता ।
रत्नमेखलया रत्नवासोपरि विभूषिता ॥३॥

वीरशृङ्खलया शोभिचारुपादसरोरुहा ।
रत्नचित्राङ्गुलीमुद्रारत्नकुण्डलमण्डिता ॥४॥

विचित्रचूडामणिना रत्नोद्यत्तिलकेन च ।
अनर्घ्यनासामणिना शोभिताऽऽस्यसरोरुहा ॥५॥

भुजकीर्त्या रत्नचित्रकण्टसूत्रेण चाङ्किता ।
पद्माक्षिणी सुबिम्बोष्ठी पद्मगर्भादिभिः स्तुता ॥६॥

कबरीभारविन्यस्तपुष्पस्तबकविस्तरा ।
कर्णनीलोत्पलरुचा लसद्भ्रूमण्डलत्विषा ॥७॥

कुन्तलानां च सन्तत्या शोभमाना शुभप्रदा ।
तनुमध्या विशालोरःस्थला पृथुनिम्बिनी ॥८॥

चारुदीर्घभुजा कंबुग्रीवा जङ्घायुगप्रभा ।
असिचर्मगदाशूलधनुर्बाणाङ्कुशादिना ॥९॥

वराभयाभ्यां चक्रेण शङ्खेन च लसत्करा ।
दंष्ट्राग्रभीशणास्योत्थहुङ्कारार्दितदानवा ॥१०॥

भयङ्करी सुरारीणां सुराणामभयङ्करी ।
मुकुन्दकिङ्करी विष्णुभक्तानां मौक्तशङ्करी ॥११॥

सुरस्त्रीकिङ्करीभिश्च वृता क्षेमङ्करी च नः ।
आदौ मुखोद्गीर्णनानाऽऽम्नाया सर्गकरी पुनः ॥१२॥

निसर्गमुक्ता भक्तानां त्रिवर्गफलदायिनी ।
निसु(शु)म्भसु(शु)म्भसंहर्त्री महीषासुरमर्दिनी ॥१३॥

तामसानां तमःप्राप्त्यै मिथ्याज्ञानप्रवर्तिका ।
तमोभिमानिनी पायाद्दुर्गा स्वर्गापवर्गदा ॥१४॥

इमं दुर्गास्तवं पुण्यं वादिराजयतीरितम् ।
पठन्विजयते शत्रून्मृत्युं दुर्गाणि चोत्तरेत् ॥१५॥

।इति श्रीमद्वादिरापूज्यचरणविरचितः दुर्गास्तवः सम्पूर्णः॥
॥ भारतीरमणमुख्यप्राणान्तर्गत श्रीकृष्णार्पणमस्तु ॥

----ooo----







ಕೋಟಾ ರಾಮದಾಸ ನಾಗೇಶ ಭಟ್ ಮತ್ತು ದಿ। ಶ್ರೀಮತಿ ಭಟ್


शैलपुत्री


ब्रह्मचारिणी


चन्द्रघण्टा


कूष्माण्ढा


स्कन्दमाता


कात्यायनी


कालरात्री


महागौरी


सिद्धिदात्री